**कविहृदयम् -**

# गुणोत्कर्षस्य निदर्शनानि

**बालक्रीडनमिन्दुशेखरधनुर्भङ्गावधि, प्रह्वता**
**ताते काननसेवनावधि, दया सुग्रीवसख्यावधि ।**
**आज्ञा वारिधिबन्धनावधि, यशो लङ्केशनाशावधि**
**श्रीरामस्य पुनातु लोकवशता जानक्युपेक्षावधि ॥**

भरतभूमौ श्रीरामः सर्वेषाम् आराध्यदेवः। पूजार्हत्वं यथा तथैव अनुकरणार्हत्वम् अपि आसीत् इति तु श्रीरामस्य अनितरसाधारणं वैशिष्ट्यम् । आचरणपूर्वकम् एव लोकं नीतिं बोधितवान् सः। तस्य आचरणं तावत् उत्कृष्टं भवति स्म यत्, तत् असाधारणं सत् पराकाष्ठां गतं भवति स्म। कविना केनचित् तस्य कानिचन आचरणानि परिकीर्तितानि।

''श्रीरामस्य बाल्यक्रीडा तादृशी आसीत् यत् महारथैः अपि अभेद्यं शिवधनुः लीलया भञ्जितवान् सः। तस्य विधेयता तादृशी यत् पितृवचनपरिपालनार्थं सः तारुण्यस्य सुन्दराणि चतुर्दश वर्षाणि सन्तोषेण एव अरण्यवासेन यापितवान्। प्रबलस्य अग्रजस्य वैरं सम्पादितवति असहाये कपिकुलजाते सुग्रीवे स्नेहः कृतः यत् तत् श्रीरामस्य मैत्रीगुणस्य पराकाष्ठां द्योतयति। तदीयायाः आज्ञायाः कठोरता एतावती उग्रा भवति स्म यत् अपारः सागरः अपि तं शरणं गच्छन् स्वस्मिन् सेतुबन्धनम् अङ्गीकृतवान् । देवानां देवस्य अपि जेता लङ्केशः एव कपिसैन्यबलमात्रेण लीलया जितः यत् तदेव श्रीरामस्य यशोहेतुकं प्रतापं प्रदर्शयति । प्रजाभिप्रायपुरस्कारबुद्धिः रामस्य तादृशी आसीत् यत् प्राणप्रियां सीताम् अपि सः प्रजाभिप्रायं पुरस्कृत्य परित्यक्तवान् । एवं श्रीरामस्य एकैकः गुणः अपि उत्कृष्टतायाः निदर्शनम् अस्ति'' ।

'अन्ये गुणाः भूषणायन्ते, किन्तु सीतापरित्यागः किं भूषणायते ? पत्नीत्यागः अपि किं गुणः ?' इति कश्चन सन्देहः बाधेत। अस्मदादिभिः कृतः क्रियमाणः वा पत्नीत्यागः दूषणम् एव इत्यत्र न विप्रतिपत्तिः । श्रीरामः न हि सामान्यः । प्राणप्रियां पत्नीं परित्यजता तेन आत्मसमर्पणम् एव कृतम् इव । तारुण्यसुखम् एव तृणं मन्यमानेन, अनुजस्य वधम् अपि निरुद्वेगम् आदिशता रामेण आत्मसमर्पणतुल्यः पत्नीत्यागः कृतः यत् तत् अवश्यं गुणायते। गुणोत्कर्षस्य निदर्शनायते चापि।

# भोजनार्थम् आगच्छतु

| | |
|---|---|
| नलिनी - हरिः ओम्, मालति, भवती गृहे अस्ति वा ? | Hello, Malathi, it's really fine you are at home. |
| मालती - आम्, अस्मि । आगच्छतु आगच्छतु । | Come in, please come in. |
| न - किं कुर्वती अस्ति मालति ? | What are you doing ? |
| मा - इदानीं पाकम् आरब्धवती । भवत्याः गृहे पाकः समाप्तः वा ? | I am preparing the food. Have you finished ? |
| न - आम् । इदानीं पाककार्यं समाप्य अत्र आगतवती । किमर्थम् अद्य भवत्याः पाके विलम्बः ? | I finished just now. Came here to look you up. Why are you late today ? |
| मा - अद्य किञ्चिदिव शिरोवेदना । प्रातः उत्थाने एव विलम्बः जातः । | I have some headache. I also got up late. |
| न - एवं वा ? औषधं स्वीकृतवती वा न वा ? | Is that so ? You took some medicine ? |
| मा - औषधस्य आवश्यकता नास्ति । किञ्चित् विश्रान्तिः स्वीक्रियते चेत् शिरोवेदना न्यूना भवति । | No need for any medicine. If I take rest, I will be free from it. |
| न - तर्हि इदानीं पाकः मास्तु । मम गृहम् आगच्छतु भोजनार्थम् । भोजनानन्तरं विश्रान्तिं स्वीकरोतु । | Then stop cooking. Come along with me for lunch. Take rest after it. |
| मा - मास्तु भगिनि ! किमर्थं भवत्याः कष्टम् ? अहम् अत्रैव पाकं करोमि ! | Thank you Nalini! Why trouble yourself. I will make the food here. |
| न - मम कष्टं किमपि नास्ति । आपत्काले साहाय्यकरणम् प्रतिवेशिनां धर्मः । भवत्याः निमित्तं विशेषपाकं तु न करोमि खलु ? | It is no trouble for me. To help in times of need is a neighbour's duty. And I am not going to cook anything special for you. |
| मा - अस्तु तर्हि । अवश्यम् आगच्छामि । | OK then, I will come with you. |

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| उच्चाटयितुम् - | To expel | पादोनभागः - | Three fourths |
| उपधानम् - | Pillow | पिपासितः - | Thirsty |
| उपभुक्तः - | Consumed | प्रतिवेशी - | Neighbour |
| उपयुङ्क्ते - | Uses | प्रत्यक्षम् - | With one's own eyes |
| कण्टकम् - | Thorn | बधिरः - | Deaf |
| कायस्थः - | Village accountant | बन्धः - | Dam |
| कुङ्कुमम् - | Vermilion mark | बुद्बुदः - | Bubble |
| कुल्या - | Canal | मण्डूकः - | Frog |
| केदारः - | Paddy field | मनुष्यत्वम् - | Humanism |
| क्रीणीयात् - | Might buy | मरीचिका - | Chilli |
| क्वथति - | Boils | वटवृक्षः - | Banyan tree |
| चुल्लिः - | Oven | वरण्डः - | Veranda |
| दग्धम् - | Burnt | वादः - | Argument |
| दंशनम् - | Biting | विदधाति - | Convicts |
| निदर्शनम् - | Example | विद्धः - | Beaten |
| निर्बन्धः - | Regulation | शोचनीया - | Deplorable |
| पनसः - | Jack tree | सञ्चितवान् - | Saved |
| परिणमति - | Results | सन्नाहः - | Preparation |
| पाञ्चालिका - | Doll | समालोचनम् - | Consultation |
| पादभागः - | One fourth | स्फटिकम् - | Alum |



# चन्दमामा

अगस्ट् - १९९४

## अन्तरङ्गम्


| | | |
|---|---|---|
| सम्पादकीयम् | ... | ७ |
| वार्ताविशेषः | ... | ९ |
| मित्रस्य सौजन्यम् | ... | ११ |
| सम्माननस्य कारणम् | ... | १६ |
| कीर्तिसिंहकथा - २ | ... | १७ |
| अपूर्वं स्फटिकम् | ... | २५ |
| विस्मृतिः | ... | ३२ |
| चन्दमामानुबन्धः - ६८ | ... | ३३ |
| दानशूरः लक्ष्मीशः | ... | ३७ |
| रसवार्ताः | ... | ४१ |
| बधिराणां सम्भाषणम् | ... | ४२ |
| महाभारतम् | ... | ४५ |
| घोरकस्य औदार्यम् | ... | ५३ |
| परिपूर्णा मानवता | ... | ६० |
| प्रकृतिवैचित्र्याणि | ... | ६३ |
| चित्रशीर्षिकास्पर्धा | ... | ६५ |


*


प्रतिकृतिमूल्यं रू. ४.००
वार्षिकं ग्राहकशुल्कं रू. ४८.००




# चन्दमामा

संस्थापकः - 'चक्रपाणिः'　　सञ्चालकः - 'नागिरेड्डी'



## सहकारः, न तु स्पर्धा

इतः ३०-४० वर्षेभ्यः पूर्वं भारतस्य विश्वविद्यालयाः तादृशानां नामानि प्रकाशयन्ति स्म, ये डाक्टरेट्पदवीं प्राप्तवन्तः आसन् । यतः संशोधनद्वारा विशेषाध्ययनद्वारा वा डाक्टर्पदवीप्राप्तिः अभिनन्दनार्हं कार्यं मन्यते स्म । अन्यपरीक्षासु ये उत्तीर्णाः तेषां क्रमसङ्ख्या पत्रिकासु प्रकट्यते स्म । वार्षिकघटिकोत्सवस्य अनन्तरं सुवर्णपदकं प्राप्तवतां नामानि पत्रिकासु दृश्यन्ते स्म । किन्तु तादृशानि नामानि न्यूनानि भवन्ति स्म । एवं फलितांशप्रकटनक्रमः आसीत् ।

किन्तु इदानीं वयं किं पश्यामः ? उत्तीर्णानां क्रमसङ्ख्यानां प्रकटनं न कुर्वन्ति पत्रिकाः । प्रत्युत, विशिष्टस्थानानि प्राप्तवताम् आवली, तैः प्रतिशतम् प्राप्ताः अङ्काः, तेषां विद्यालयस्य नाम, तेषां भावचित्राणि, क्वचित् प्रथमादिस्थानं प्राप्तवतां सन्दर्शनम् (क्वचित् तेषां मातापितॄणां सन्दर्शनम् अपि) इत्यादीनि प्रकटकयन्ति । अन्यः अपि क्रमः एषु दिनेषु दृश्यते यत् विद्यालयीयाः महान्तं धनव्ययं कृत्वा विशिष्टस्थानं प्राप्तवतां छात्राणां भावचित्राणि प्रकटनद्वारा प्रकाशयन्ति ।



तान्त्रिकं, वैद्यकीयम् इत्यादिकं वृत्तिपरं यत् शिक्षणम् अस्ति तदर्थं प्रवेशपरीक्षा आयोज्यते । तत्र अवकाशं प्राप्तवतां नामानि, तैः प्राप्तान् अङ्कान् च विद्यालयाः प्रकटनद्वारा प्रकाशयन्ति । एतादृशैः प्रचारैः ख्यातानां विद्यासंस्थानां प्रचारः वर्धते, प्रवेशार्थिनां सङ्ख्या वर्धते, ततः अधिकः आयः प्राप्यते ।

एतादृशस्य दर्शनात् एषः भावः उदेति यत् एतेन छात्रेषु अहितकरी स्पर्धा विरोधिमनोभावः वा वर्धेत खलु ? इति । एतत् मनसि निधाय तमिळनाडुराज्यस्य कश्चन पण्डितः एवं सूचितवान् अस्ति यत् विद्यार्थिनां निर्माणं सहकारभाववर्धकत्वेन कुर्वन्तु, न तु स्पर्धात्मकभाववर्धकत्वेन इति । सः अभिप्रैति यत् वयं शैक्षणिक-यन्त्रमानवान् निर्मान्तः स्मः इति ।

एतस्याः समस्यायाः परिहारार्थं तेन सूचितः मार्गः नाम - शिक्षणं मानवीयताधारितं भवेत् इति, उत्तीर्णानुत्तीर्णविभागः न स्यात्, प्रत्युत, 'निबोधत, संविभज्य सेवन्ताम्' इत्येतस्य भावस्य जागरणं स्यात् इति च । किम् अस्मदीयाः विद्यालयाः एतदर्थं प्रयत्नं कुर्युः ?

सम्पुटः - ११　　अगस्त् - १९९४　　सञ्चिका - ५

प्रतिकृतिमूल्यं रू. ४.००　*　वार्षिकं ग्राहकशुल्कं रू. ४८.००



# नामनिर्वचनम् - १७

*(निर्वचनं नाम शब्दानाम् अवयवार्थस्य निरूपणम् । नामपदेन अत्र सुबन्ताः विक्षिताः । अस्मिन् विभागे सुबन्तानाम् अवयवार्थस्य निरूपणं क्रियते । आदौ तु संज्ञाशब्दानाम् (पुरुषाणां स्त्रीणां च) अवयवार्थाः निरूप्यन्ते ।)*

**अनुराधा -** अनुगता राधां = विशाखाम् अनुराधा । नक्षत्रविशेषस्य नाम अनुराधा इति । विशाखानक्षत्रस्य (यस्य च अपरं नाम राधा इति) अनन्तरं एषा भवति । अतः राधाम् अनुगच्छति इति अनुराधा ।

**मार्तण्डः -** [मृत + अण्ड + अण्] मृते अण्डे जातः इति, मृतात् अण्डात् जायते इति, मृतम् अण्डं जीवयति इति च मार्तण्डशब्दस्य व्युत्पत्तिः विभिन्नकोषेषु प्रदर्शिता दृश्यते । मार्तण्डः नाम सूर्यः । तथा हि अमरकोषे - 'विकर्तनार्कमार्तण्डः ...' इति ।

'मृतम् अण्डं यस्य सः = मृतण्डः कश्चित् ऋषिः । तस्य अपत्यम् (अण्) मार्तण्डः' इति सिद्धान्तकौमुद्याः बालमनोरमाव्याख्याने व्युत्पत्तिः प्रदर्शिता ।

अनिष्पन्नेषु गात्रेषु पुत्रं दृष्ट्वा पिताब्रवीत् ।<br>
आर्तस्त्वं भव माण्डेति मार्तण्डस्तेन सः स्मृतः ॥

इति हलायुधकोषकारः मार्तण्डशब्दार्थनिरूपणावसरे कञ्चन श्लोकम् उदाहरति । एतस्य मूलं तु न ज्ञायते । 'मार्ताण्डः' इति दीर्घमध्यप्रयोगः अपि श्रूयते । एतत् रूपं वेदे केवलम् इति केचित् । अमरकोषस्य सुधानामके व्याख्याने - 'अथ मार्तण्डमार्ताण्डौ' इति नामनिधानशब्दार्णवयोः उदाहरणप्रदर्शनपुरस्सरं लोके अपि 'मार्ताण्ड' इति प्रयोगः शक्यते इति सूचितम् ।

**मालती -** मां लक्ष्मीं लाति [मा + ला (आदाने) + कः + ङीष्], मां लक्ष्मीं लतति [मा + लत (वेष्टने) + कः + ङीष्], मालं विष्णुम् अतति [माल + अत (सातव्यगमने) + अच् + ङीष्], मलते शोभां धारयति [मल + अतच् + ङीष्] इति मालती । या शोभां करोति, सम्पत्तिं वर्धयति सा मालती इति तात्पर्यं वक्तुं शक्नुमः ।

मालती नाम कोमलः कश्चन पुष्पविशेषः । युवतिः, चन्द्रिका, नदी इत्यादयः अर्थाः अपि एतस्य शब्दस्य सन्ति ।

**सूचना -** *भवन्तः कस्यचित् नाम्नः अर्थं ज्ञातुम् इच्छन्ति चेत् कृपया लिखन्तु । निर्वचनं कृत्वा अत्र प्रकाशयिष्यामः ।*

**सङ्केतः - संस्कृतचन्दमामा, 'अक्षरम्', ८ क्रास्, गिरिनगरं २ फेस्, बेङ्गलूरु - ५६० ०८५.**

वार्ताविशेषः -

# दक्षिणाफ्रिकादेशस्य नवोदयः



''दक्षिणाफ्रिकादेशस्य व्यवहारे निर्वञ्चनं व्यवहरामि अहम् इति प्रतिज्ञां करोमि'' इति वदन् नेल्सन् मण्डेलामहोदयः मे-मासस्य दशमे दिनाङ्के तस्य देशस्य अध्यक्षस्थानम् आरूढवान्। तत्पूर्वदिने प्रवृत्तस्य नूतनसंसद्भवनस्य प्रथमसमावेशे देशाध्यक्षस्थानार्थं नेल्सन्मण्डेला बहुमतैः चितः। एवं च नेल्सन् मण्डेला दक्षिणाफ्रिकादेशस्य प्रथमः कृष्णवर्णीयः अध्यक्षः।

दक्षिणाफ्रिकादेशे प्रभूतं सुवर्णं खनिजांशाः च उत्पद्यन्ते । एतस्मात् आकृष्टाः युरोप्देशीयाः दक्षिणाफ्रिकादेशं प्रति आगताः। परदेशम् आगत्य अपि तत्रत्यान् कृष्णवर्णीयान् जनान् तिरस्कारेण दृष्टवन्तः ते। १६५२ तमे वर्षे 'डच् ईस्ट् इण्डिया कम्पेनि' केप्टौन् प्रदेशं प्रविश्य, ततः स्ववसतिप्रदेशस्य विस्तारं क्रमशः अकरोत् । हिन्दुमहासमुद्रस्य अट्लाण्टिक्महासमुद्रस्य अरेबियासमुद्रस्य च मार्गेण याः नौकाः गच्छन्ति, ताभिः आफ्रिकादेशस्य दक्षिणभागस्थं 'केप् आफ् गुड् होप्' अतिक्रम्य गन्तव्यम् आसीत्। एवं रीत्या 'केप् टौन्' आयस्य केन्द्रं सत् नौकायानानां मूलस्थानरूपेण परिणामं प्राप्नोत्। एतैः कारणैः शतकाभ्यन्तरे एव ब्रिटन् दक्षिणाफ्रिकादेशे स्थानं सम्पाद्य स्थिरम् अतिष्ठत्।

तत्र आगताः श्वेतजनाः स्थानीयान् कृष्णवर्णीयान् कञ्चित् निर्दिष्टं प्रदेशं प्रति प्रेषितवन्तः। तं प्रदेशम् अतिक्रम्य अन्यत्र कुत्रापि तैः न गन्तव्यम् इति निर्बन्धः कृतः श्वेतजनैः। वाणिज्यप्रदेशेषु चिकित्सालयेषु पाठशालासु च कृष्णवर्णीयानां प्रवेशः निषिद्धः अभवत् । कस्मिंश्चित् अपि विषये कृष्णवर्णीयानां स्वातन्त्र्यम् एव न आसीत् । अल्पसंख्याकाः श्वेतजनाः स्वकीयम् अधिकारं शाश्वतं कर्तुं 'जातिभेदपद्धतिं' परिचाय्य तां पद्धतिं व्यवहारे आनीतवन्तः।

एवं जातिभेदम् अनुभूतवत्सु भारतीयाः अपि सन्ति । एते सर्वे अस्माकं देशस्य गुजरात्-महाराष्ट्रादिराज्येभ्यः तत्र गत्वा वासम् आरब्धवन्तः आसन्। मोहनदास् करमचन्दगान्धी यद्यपि इङ्ग्लैण्ड्देशे ब्यारिष्टर्पदवीं प्राप्तवान्, तथापि सः कृष्णवर्णीयः इति कारणतः दक्षिणाफ्रिकादेशे धूमशकटे प्रथमश्रेण्यां प्रयाणं कुर्वन्तं तं गले गृहीत्वा शकटात् क्षिप्तवन्तः इति विषयं सर्वे जानन्ति एव। एतं जातिभेदसिद्धान्तं सम्मुखीकृत्य गान्धी 'नेटाल् इण्डियन् कांग्रेस्'नामिकां संस्थां संस्थाप्य अहिंसासत्याग्रहम् आरब्धवान्।

गान्धीमहोदयस्य अहिंसासत्याग्रहेण प्रेरितः नेल्सन् मण्डेला 'आफ्रिकन् नेषनल् कांग्रेस्'

(ए.एन्.सि.) द्वारा कृष्णवर्णीयानां स्वातन्त्र्यार्थं कार्यम् आरब्धवान्। १९४८ तमे वर्षे सर्वकारेण जातिभेदपद्धतिः व्यवहारे आनीता। तदा ए.एन्.सि. श्वेतवर्णीयान् अधिकारतः उच्चाटयितुं प्रयत्नम् अकरोत्। एतस्मात् कारणात् श्वेतवर्णीयानां सर्वकारः १९५२ तमे वर्षे नेल्सन् मण्डेलामहोदयस्य बन्धनं कृत्वा आजीवन-कारागृहवासरूपं दण्डनं विहितवान्। तथापि ए.एन्.सि. सत्याग्रहं न अत्यजत्। १९८९ तमे वर्षे अध्यक्षपदवीं स्वीकृतवान् 'डीक्लर्क्' महाशयः एतस्याः समस्यायाः विषये तीव्रं चिन्तनं कृतवान्। विश्वस्य अनेके देशाः सम्भूय चिन्तितवन्तः यत् दक्षिणाफ्रिकादेशस्य सर्वकारेण मानवाधिकारविषये मानवोद्धारविषये च सूक्ष्मं परिशीलनीयम् इति। दक्षिणाफ्रिकादेशे याः क्रिकेट्स्पर्धाः प्राचलन्, ताः स्पर्धाः प्रति अन्यदेशीयाः क्रीडाकारान् न प्रेषितवन्तः। स्वदेशस्य क्रीडास्पर्धासु भागं ग्रहीतुं दक्षिणाफ्रिकाजनानाम् अवकाशं न दत्तवन्तः अपि। ओलम्पिक्क्रीडासु अपि दक्षिणाफ्रिकादेशः भागं स्वीकर्तुम् अशक्तः जातः। अनन्तरं डीक्लर्कमहाशयः जातिभेदपद्धतिं व्यवहारात् निष्कासितवान्। अनन्तरं सः नेल्सन् मण्डेलामहोदयं कारागृहवासात् विमोचितवान्। अनन्तरं मण्डेला अल्पसंख्याक-श्वेतवर्णीयानां सर्वकारम् उक्तवान् यत् - कृष्णवर्णीयाः अपि सर्वत्र भागं वोढुम् अधिकारं प्राप्नुयुः इति। 'कृष्णवर्णीयाः अपि निर्वाचने स्पर्धिरूपेण भागं गृहीत्वा संसद्भवने सदस्यत्वं प्राप्तुम् अवकाशं प्राप्नुयुः' इति विषये वादं कृत्वा जयं प्राप्तवान् सः। निर्वाचनस्य दिनाङ्कः निश्चितः। निर्वाचनसमये न्यायरक्षणार्थं शान्तिरक्षणार्थं च साहाय्यं कर्तुम् इच्छन्तः विभिन्नदेशाः वीक्षणार्थं प्रतिनिधीन् प्रेषितवन्तः। निर्वाचनं न्यायरीत्या प्रवृत्तम्। आफ्रिकन् नेशनल् कांग्रेस् ६२ प्रतिशतं मतैः जयं प्राप्नोत्। नेल्सन्




मण्डेला सर्वानुमतेन देशाध्यक्षरूपेण चितः। अनन्तरं मण्डेला स्वपक्षस्य कञ्चित् नायकं, भूतपूर्वाध्यक्षं डीक्लर्कमहोदयं च उपाध्यक्षरूपेण नियोजितवान्। नेल्सन् मण्डेलामन्त्रिमण्डले ३९ सदस्याः सन्ति। तेषु चत्वारः भारतीयमूलाः। भारतीयमूला महिला काचित् संसद्भवने सभाध्यक्षरूपेण चिता अस्ति इति तु विशेषः।

अध्यक्षपदवीं प्राप्य नेल्सन् मण्डेलामहोदयः स्वस्य प्रथमे भाषणे एवम् उक्तवान् - 'मनसि भयद्वेषादिकं विना मानवीयतारक्षणार्थं कृष्णवर्णीयैः श्वेतवर्णीयैश्च सम्भूय परस्परं गौरवपूर्वकं जीवनं करणीयम्। तादृशस्य ऐक्ययुक्तस्य दक्षिणाफ्रिकादेशस्य सर्वविधप्रगत्यर्थं प्रयत्नं करोमि' इति।

प्रपञ्चे एव प्रसिद्धः एषः राजकीयबन्दी नेल्सन् मण्डेलामहोदयः यस्य सिद्धान्तस्य अनुसरणात् प्रजानां हितं साधयितुं शक्तवान्, तादृशस्य सिद्धान्तस्य प्रवर्तकस्य महात्मनः गान्धिमहोदयस्य मार्गं कदापि न विस्मरिष्यति इति वयं विश्वसिमः।




# मित्रस्य सौजन्यम्

सीतापतिः कुसीदवाणिज्यं करोति स्म। ये ऋणं प्रष्टुम् आगच्छन्ति तैः सह सविनयं व्यवहरति स्म सः। धनप्रतिसङ्ग्रहणे तेषां यथा कष्टं न स्यात् तथा तेषां सकाशात् धनं प्रतिप्राप्नोति स्म। अतः बहवः तस्य समीपम् ऋणं प्रष्टुम् आगच्छन्ति स्म।

कुसीदवाणिज्यं कृत्वा सीतापतिना इव धनं सम्पादनीयम् इति बहूनाम् इच्छा। किन्तु धनस्य प्रतिस्वीकरणतन्त्रम् अजानन्तः ते कुसीदवाणिज्यं कर्तुं सङ्कोचम् अनुभवन्ति स्म। तादृशेषु चन्द्रराजः अपि अन्यतमः। स्वसमीपे विद्यमानेन अल्पेन धनेन एव कुसीदवाणिज्यं कृत्वा धनं सम्पादयितुम् इच्छति स्म चन्द्रराजः।

चन्द्रराजः बहुधा विचिन्त्य अन्ते निर्णीतवान् – 'सीतापतिः प्रतिशतं पञ्चदश रूप्यकाणि वृद्धिरूपेण स्वीकरोति। अहं यदि प्रतिशतं सार्धसप्तरूप्यकाणि स्वीकुर्यां, तर्हि बहवः जनाः ऋणं स्वीकर्तुं मत्समीपम् एव आगमिष्यन्ति। वृद्धिः न्यूना अस्ति इति कारणतः कृतज्ञताभावनया सर्वे अपि शीघ्रातिशीघ्रं धनं प्रत्यर्पयिष्यन्ति' इति।

स्वकीयम् एतत् चिन्तनं चन्द्रराजः पत्नीं निवेदितवान्। सा चन्द्रराजस्य अपेक्षया अपि बुद्धिमती। सा पतिम् उक्तवती – "एतद्विषये भवान् त्वरया निर्णयं मा स्वीकरोतु। यतः भवान् सर्वेभ्यः ऋणं ददाति चेत् सद्यः एव अस्माकं समग्रा सम्पत्तिः समाप्ता भविष्यति। सीतापतेः वाणिज्ये अनुभवः अधिका, तथापि धनस्य प्रतिस्वीकरणं तस्य कष्टाय भवति। एवं सति भवान् वृद्धिं न्यूनं स्वीकरोति चेत् भवतः समीपे आगन्तॄणां संख्या अधिका भवति। अनन्तरं तेषां सकाशात् धनस्य प्रतिस्वीकरणं महते कष्टाय भवति। एतेन वयम् अपि निर्धनाः भवामः, अस्माकं विषये सीतापतेः सदभिप्रायः अपि

''श्रीमाता''



नष्टः भवति। अपि च सीतापतिः अस्माकं दूरबन्धुः अपि। नीतिमान् युधिष्ठिरः अपि युद्धे जयप्राप्त्युपायं ज्ञातुं शत्रुपक्षस्थस्य भीष्मस्य समीपं गतवान्। अतः भवान् अपि एतद्विषये सीतापतेः अभिप्रायं पृच्छतु। अनन्तरम् अग्रिमं चिन्तयाम" इति।

चन्द्रराजः पत्न्याः वचनम् अङ्गीकृत्य सीतापतेः समीपं गत्वा स्वकीयं चिन्तनं निवेदितवान्। सीतापतिः सर्वं श्रुत्वा अन्ते उक्तवान् - "भवता मम समीपम् आगतं यत् तत् सुखाय एव अभवत्। यतः कुसीदवाणिज्यं न तथा सुलभम्। धनस्य व्यवहारः अतीव कष्टकरः। तस्मिन् व्यवहारे लाभः हानिः वा कथं भवति इति अहं सम्यक् जानामि। इतःपरम् अहम् अपि मम वाणिज्यं महता प्रमाणेन वर्धयितुम् इच्छामि। तदर्थम् अधिकं धनम् आवश्यकम्। भवादृशाः यदि मह्यं धनं दद्युः, तर्हि अहं प्रतिशतं दशरूप्यकात्मकं वृद्धिं दास्यामि। तस्य धनस्य विनियोगं वाणिज्ये कुर्वन् लाभं प्राप्स्यामि। किन्तु ये मम समीपे धनं यच्छन्ति, तैः पञ्च वर्षाणि यावत् धनं न प्रतिप्रष्टव्यम्" इति।

सीतापतेः एतत् वचनं चन्द्रराजाय नितराम् अरोचत। 'विनायासं स्वधनस्य वृद्धिः भवति' इति सः अतीव सन्तुष्टः। 'अहं प्रतिशतं सार्धसप्तरूप्यकात्मिकां वृद्धिं स्वीकर्तुम् इष्टवान् आसम्। परन्तु सीतापतिः प्रतिशतं दश रूप्यकाणि ददामि इति उक्तवान्। सर्वं समीचीनम् एव। किन्तु पञ्च वर्षाणि यावत् धनं न प्रतिप्रष्टव्यम् इति सीतापतिना उक्तम्। मध्ये कदाचित् कष्टकालः आगतः चेत् किं करणीयम्?' इति चिन्तयन् चन्द्रराजः स्वसमस्यां सीतापतिम् उक्तवान्।

एतत् श्रुत्वा सीतापतिः उक्तवान् - "तादृशः कष्टकालः आगतः चेत् मत्समीपे भवदीयं यत् धनं भवति, ततः एव भवान् पादोनभागम् ऋणरूपेण स्वीकर्तुं शक्नोति। भवदीयं धनं मम समीपे मूलधनरूपेण भवति इति कारणतः अहं भवतः सकाशात् प्रतिशतं द्वादशरूप्यकाणां वृद्धिं केवलं स्वीकरोमि। द्वादशरूप्यकेषु दश रूप्यकाणि भवतः एव धनम्। तन्नाम रूप्यकद्वयेन एव भवान् ऋणं प्राप्तुं शक्नोति" इति।

सीतापतिः यत् उक्तवान् तं व्यवहारं

सम्यक् न ज्ञातवान् चन्द्रराजः । किन्तु सः तदा सीतापतिं किमपि न उक्तवान् । ततः गृहं गत्वा एतद्विषये पत्न्याः अभिप्रायं पृष्टवान् ।

तदा चन्द्रराजस्य पत्नी उक्तवती - "एषः उपायः सम्यक् एव अस्ति । धान्यविक्रयणतः नारिकेलविक्रयणतः च तदा तदा अस्माभिः धनं सम्पादितं भवति । वयं तत् धनं वृथा व्ययीकुर्मः । यदि धनस्य वृद्धिः भवति, तर्हि धनसञ्चयः करणीयः इति इच्छा भवति । यदि वृद्धिः अस्माभिः दातव्या भवति, तर्हि अनिवार्यपरिस्थितौ एव ऋणं कुर्मः । एवं च व्ययं न्यूनीकर्तुं शक्नुमः वयम् । तेन अस्माकं सम्पत्तिः अपि वर्धिता भवति" इति ।

पत्न्याः वचनम् अपि सत्यम् इति अभासत चन्द्रराजाय । सः अनन्तरदिने किञ्चित् धनं नीत्वा सीतापतये दत्तवान् ।

वीरभद्रः चन्द्रराजस्य प्रतिवेशी । चन्द्रराजः वीरभद्रः च बाल्यस्नेहितौ । द्वयोरपि भूमिः समाना अस्ति । किन्तु वीरभद्रस्य जीवनरीतिः भिन्ना । तस्य जीवननिर्वहणार्थं तदीयं धनं पर्याप्तं न भवति स्म । अतः सः चन्द्रराजसकाशात् ऋणरूपेण धनं स्वीकृत्य कालान्तरे प्रत्यर्पयति स्म । इदानीं चन्द्रराजः सीतापतये धनं दत्तवान् इति कारणतः वीरभद्रः चन्द्रराजतः ऋणरूपेण धनं स्वीकर्तुं न शक्तवान् ।

वीरभद्रस्य कष्टं ज्ञात्वा चन्द्रराजः तं बोधितवान् - "वृथा धनं मा व्ययीकरोतु । मितव्ययं करोतु । अवशिष्टं सीतापतेः हस्ते




ददातु । ततः वृद्धिः प्राप्यते । विनायासं धनं सञ्चितं भवति । तेन भवतः जीवनं सुखमयं भविष्यति" इति ।

चन्द्रराजस्य एतत् बोधनं वीरभद्राय न अरोचत । सः गृहं गत्वा चन्द्रराजस्य अभिप्रायं पत्नीम् उक्तवान् । तदा वीरभद्रस्य पत्नी उक्तवती - "तस्य अभिप्रायः तस्मै रोचते । केचन केवलं धनं सम्पादयन्ति । अपरे केचन धनेन सुखम् अनुभवन्ति । वयं तु सुखम् इच्छामः" इति ।

सप्ताहः अतीतः । वीरभद्रस्य क्षेत्रे मरीचिका उत्तमरूपेण प्रवृद्धा आसीत् । मरीचिकायाः उत्तमं मूल्यम् अपि आसीत् तेषु दिनेषु । तत्कारणतः व्ययानन्तरम् अपि तस्य हस्ते त्रिसहस्रं रूप्यकाणि अवशिष्टानि ।



तेन धनेन वज्रस्य कण्ठहारः क्रेतव्यः इति वीरभद्रस्य पत्न्याः इच्छा । तदर्थं वीरभद्रः सपत्नीकः स्वर्णकारस्य गुरुलिङ्गस्य समीपं गत्वा स्वस्य इच्छाम् उक्तवान् । तदा स्वर्णकारः उक्तवान् - "वज्रहारस्य निमित्तं पञ्चसहस्रं रूप्यकाणि न्यूनातिन्यूनम् आवश्यकानि एव । ततोऽपि न्यूनमूल्येन वज्रकण्ठहारः कर्तुं सर्वथा न शक्यते" इति।

तदा वीरभद्रस्य पत्नी पतिम् उक्तवती - "भवतः स्नेहितः चन्द्रराजः ह्यः नारिकेलविक्रयणतः पञ्चसहस्रं रूप्यकाणि प्राप्तवान् अस्ति । सः तत् धनं इतोऽपि सीतापतये न दत्तवान् स्यात् । भवान् इदानीम् एव गत्वा ऋणं प्रार्थयतु" इति।

पत्न्याः वचनम् अङ्गीकुर्वन् वीरभद्रः चन्द्रराजसमीपं गत्वा विषयं निवेदितवान्। एतत् श्रुत्वा चन्द्रराजः - "वज्रस्य कण्ठहारः अनिवार्यः न । तत् धनं नीत्वा सीतापतये ददातु । तेन भवान् वृद्धिरूपेण लाभं प्राप्स्यति" इति वीरभद्रं बोधितवान्।

तदा वीरभद्रः - "केचन सूक्ष्माः विषयाः भवता न ज्ञायन्ते । यदि वज्रस्य कण्ठहारं न कारयामि, तर्हि मम पत्नी तया एव चिन्तया पीड्यमाना मृता भविष्यति । धनार्थं पत्नीं मारयितुं न सिद्धः अहम् । तादृशः कठोरमनस्कः न अहम्" इति उक्तवान्।

तदा अन्यत् किमपि वक्तुम् अशक्नुवन् चन्द्रराजः उक्तवान् - "एवं तर्हि भवान् एवं करोतु । नारिकेलविक्रयणतः मया यानि पञ्चसहस्रं रूप्यकाणि प्राप्तानि, तानि सीतापतये दत्त्वा, भवते यावत् धनम् आवश्यकं तावत् अहं पुनः सीतापतितः ऋणरूपेण स्वीकरोमि । सामान्यतः सीतापतिः प्रतिशतं पञ्चदशरूप्यकाणां वृद्धिं स्वीकरोति । यस्य धनं तस्य समीपे मूलधनरूपेण भवति तादृशात् प्रतिशतं द्वादशरूप्यकाणां वृद्धिं स्वीकरोति । एतेन प्रतिशतं त्रयाणां रूप्यकाणां लाभः एव । भवतः पत्न्याः वज्रकण्ठहारः अनिवार्यः इति भवता उक्तम् इति कारणतः मया एषः उपायः सूचितः । भवते यथा रोचते तथा करोतु" इति।

स्नेहितः चेत् अपि चन्द्रराजः वृद्धि - सम्बद्धम् ऋणम् एव ददाति इति खिन्नः वीरभद्रः तं किमपि वक्तुम् अशक्नुवन् मौनं

गृहं गतवान्।

अनन्तरदिने चन्द्रराजः सीतापतये धनं दत्त्वा, ततः पुनः ऋणं स्वीकृत्य आनीय वीरभद्राय दत्तवान्।

अनन्तरदिनेषु वीरभद्रः पत्न्यै वज्रस्य कण्ठहारं कारितवान्। वृद्धिसम्बद्धम् ऋणं प्रत्यर्पणीयम् इति कारणतः वीरभद्रः तत्पत्नी च किञ्चित्कालं यावत् मितव्ययेन कुटुम्बनिर्वहणं कृतवन्तौ। पञ्चसु मासेषु किञ्चित् धनं सञ्चितवन्तौ च।

अनन्तरं कदाचित् वीरभद्रः शतोत्तरद्विसहस्रं रूप्यकाणि स्वीकृत्य चन्द्रराजस्य गृहं गतवान्। तस्मै दत्तवान् च। चन्द्रराजः वीरभद्रेण दत्तं धनं गणितवान्। अनन्तरं शतं रूप्यकाणि तस्मै प्रतियच्छन् चन्द्रराजः - "भवान् मत्सकाशात् द्विसहस्रं रूप्यकाणि केवलं स्वीकृतवान् खलु! पुनः शतं रूप्यकाणि किमर्थम्?" इति पृष्टवान्।

"तत् पञ्चानां मासानां वृद्धिधनम्" इति उक्तवान् वीरभद्रः।

तदा चन्द्रराजः - "स्नेहिताय आपत्काले धनं दत्तवान् अहम्। परन्तु तत् वृद्धिनिमित्तं न। अहं भवता सह कुसीदवाणिज्यं करोमि इति चिन्तितवान् वा भवान्?" इति सखेदम् उक्तवान्।

एतत् श्रुत्वा वीरभद्रः उक्तवान् - "इदानीं भवतः मनः परिवृत्तं स्यात्। किन्तु ऋणदानसमये भवता किम् उक्तम् इति स्मरति वा भवान्? भवदीयं धनं सीतापतये दत्त्वा ततः ऋणं स्वीकरोमि इति भवता उक्तम् आसीत् खलु!" इति।

तदा चन्द्रराजः उक्तवान् - "मया उक्तं सर्वं मद्विषये। तेन भवान् धनसञ्चयक्रमं ज्ञास्यति, मितव्ययं च अभ्यस्यति इत्येव मम आशयः आसीत्, न तु भवतः सकाशात् वृद्धिः स्वीकरणीया इति" इति।

स्नेहितस्य सौजन्यं, मितव्ययेन जीवननिर्वहणं च ज्ञातवान् वीरभद्रः। सः स्वव्यवहारविषये पश्चात्तापम् अनुभवन् चन्द्रराजं क्षमां प्रार्थितवान्।

अनन्तरकाले वीरभद्रः कदापि कस्मादपि ऋणं न स्वीकृतवान्।



# सम्माननस्य कारणम्

काशीपुरस्य भूस्वामी काशीपतिः स्वजन्मदिनसन्दर्भे कवीनां काश्चित् स्पर्धाम् आयोजितवान्। तस्याः स्पर्धायाः वैशिष्ट्यम् आसीत् यत् - एकघण्टात्मके अवधौ शिवम् अधिकृत्य शतं श्लोकाः रचनीयाः आसन्। अस्यां स्पर्धायां यः जयं प्राप्नोति, सः सहस्रं रूप्यकाणि, सरस्वतीपुत्रः इति बिरुदं च प्राप्नोति स्म।

तस्यां स्पर्धायां रजनीचन्द्रनामकः पञ्चविंशतिवर्षवयस्कः युवकः कश्चित् भागं गृहीतवान्। अशीतिवर्षीयः वृद्धः नारायणाचार्यः अपि भागं गृहीतवान्। प्रतिभाविषये उभौ अपि समानौ। द्वयोर्मध्ये कः विजयी भविष्यति इति विषये सभाजनाः सर्वे कुतूहलेन पश्यन्तः आसन्।

भूस्वामी काशीपतिः बहु विचिन्त्य अन्ते प्रकटितवान् यत् नारायणाचार्यः स्पर्धायां जयं प्राप्तवान् इति।

अनन्तरं सहस्ररूप्यकैः नारायणाचार्यः सबिरुदं सम्मानितः भूस्वामिना काशीपतिना।

सभाकार्यक्रमाः समाप्ताः। सर्वे अपि गतवन्तः। तदा भूस्वामिनः सहायकः भूस्वामिनं पृष्टवान् - ''स्पर्धायां रजनीचन्द्रः नारायणाचार्यश्च समानौ प्रतिभाशालिनौ आस्ताम्। एवं सत्यपि नारायणाचार्यः एव जयं प्राप्तवान् इति प्रकटितवान् भवान्। एतस्य विशेषकारणं किमपि अस्ति वा?'' इति।

तदा भूस्वामी उक्तवान् - ''आम्! कारणम् अस्ति। रजनीचन्द्रः इतोऽपि युवकः। सः अस्मिन् वर्षे, आगामिवर्षे, तदनन्तरवर्षे वा सम्माननं प्राप्नुयात्। किन्तु नारायणाचार्यः वृद्धः। सः यदा कदापि इहलोकं त्यजेत्। तादृशं वृद्धम् इदानीं यदि न सम्मानयेम, तर्हि अग्रे कदापि सम्माननार्थं तेन अवकाशः न लभ्येत खलु! अतः एव नारायणाचार्यः विजयी इति अहं प्रकटितवान्, सम्मानितवान् च'' इति।





# कीर्तिसिंहकथा - २

(जयसेनः कोसलराजस्य सुषेणस्य आप्तमित्रम्। तस्य पुत्री कीर्तिसेना। कीर्तिसेनायाः सामर्थ्यस्य परीक्षां कर्तुम् इच्छन् राजा तां सूचितवान् यत् विद्याभ्यासं समाप्य प्रत्यागच्छन्तं युवराजं कीर्तिसिंहं भवती अरावलीपर्वतप्रदेशे देवालये बन्धने स्थापयेत् इति। कीर्तिसेना एतत् अङ्गीकृतवती। आरम्भे जयसेनः यद्यपि अत्र असम्मतिं प्रदर्शितवान्, तथापि अन्ते अङ्गीकृत्य स्वस्य पूर्वजानां विषयं तां बोधितवान्। वृद्धः जयसेनः विचित्रवर्मणे अपूर्वशक्तियुक्तं हारम् उपायनीकृतवान्। मृगयार्थं गतेन विचित्रवर्मणा भूगर्भे कश्चन शक्तिविग्रहः प्राप्तः। तद्विषये आगमशास्त्रज्ञैः सह समालोचनार्थं राजा राजधानीं प्रत्यागतवान्।)

राजा विचित्रवर्मा राजधानीं प्रत्यागत्य प्रथमं जयसेनं दृष्टवान्। राज्ञः मुखात् प्रवृत्तं सर्वं श्रुतवतः जयसेनस्य मनसि अपि अपूर्वः अव्यक्तः कश्चन आनन्दः उत्पन्नः।

ततः आगमशास्त्रज्ञाः आनायिताः। राजवंशस्य हितचिन्तकाः ज्येष्ठाः अपि मेलिताः। सर्वैः सह समालोचनम् आरब्धम्।

बहुधा चर्चां कृत्वा ग्रन्थादिकं च परिशील्य जयसिंहः अन्ये च राजानम् उक्तवन्तः - "इदानीं तस्य विग्रहस्य अन्यत्र नयनं न उचितम्। अतः तत्रैव मन्दिरं निर्माय विग्रहस्य प्रतिष्ठापनं करणीयम्। तस्याः देव्याः अनुग्रहः, विग्रहप्रतिष्ठापनात् प्राप्यमाणः लाभः वा यद्यपि भवता न प्राप्यते, तथापि भवदनन्तरजेषु केनचित्



वीरेण तु प्राप्यते एव। सः वीरः देव्याः अनुग्रहेण राज्यं विस्तारीकृत्य दक्षिणदेशानां सार्वभौमः भविष्यति। तस्य कीर्तिः सर्वासु दिक्षु प्रसृता भविष्यति। तस्य शासनकाले सर्वाः देवताः नित्यपूजां प्राप्स्यन्ति। तस्य परिणामतः तत्तद्देवताविग्रहेषु तासां सान्निध्यं व्यक्तं भविष्यति। देवतासम्बन्धिनः उत्सवाः रथयात्राः इत्यादयः तदा काले काले भविष्यन्ति'' इति।

एतत्सर्वं श्रुत्वा विचित्रवर्मा ज्ञातवान् यत् मृगयासमये रात्रौ अवर्णनीयः आनन्दः अकस्मात् किमर्थं प्राप्तः इति। 'विग्रहप्राप्तिफलं देवतानुग्रहं च यद्यपि अहं प्राप्तुं न शक्नोमि, तथापि मद्वंशीयः कश्चित् तु प्राप्स्यति एव' इति ज्ञातवतः तस्य महान् सन्तोषः एव जातः। अनन्तरं सः योग्ये मुहूर्ते देव्याः विग्रहम् अरण्ये प्रतिष्ठापितवान्। देव्याः निमित्तम् आलयः चापि तेन तत्र निर्मितः।

किन्तु अरण्यस्थं तं देवालयं प्रति जनाः तु न गच्छन्ति स्म। गच्छता कालेन जनैः स च देवालयः सर्वथा विस्मृतः।

एतत्सर्वं दैवनिर्णयानुगुणं प्रचलति इति निर्णीय विचित्रवर्मा देवीं मनसा नमस्कुर्वन् मौनम् आश्रितवान्।

एवम् एव कानिचन वर्षाणि अतीतानि। हारस्य साहाय्येन विचित्रवर्मा भूमिस्थं निधिं ज्ञात्वा बहिः आनीतवान्। तं प्रजाहितकार्येषु विनियुक्तवान्। न्याय्येन मार्गेण सः राज्यपालनं करोति स्म। हारवार्ता आरम्भे यद्यपि रहसि आसीत्, किन्तु दिनेषु गतेषु सा वार्ता सर्वत्र प्रसृता। विदेशीयराजैः अपि एषा वार्ता ज्ञाता।

दक्षिणापथे बलशाली सुभिक्षः च देशः कोसलदेशः। द्वितीयं स्थानं तु काम्बोजदेशस्य। काम्बोजदेशः कोसलस्य पूर्वभागे अस्ति। तयोः देशयोः मध्ये यत् सुविशालम् अरण्यं प्रसृतम् अस्ति तस्मिन् शक्तिदेव्याः आलयः अस्ति।

तत्काले काम्बोजदेशं चक्रादित्यः नाम राजा पालयन् आसीत्। तस्य स्वभावः तु उत्तमः आसीत्। किन्तु सः प्रजापालने दक्षः न आसीत्। अतः तस्य शासनकाले प्रजाः बहुविधानिकष्टानि अनुभवन्ति स्म। राज्ञः विचित्रवर्मणः उत्तमशासनस्य विषये,

कोसलदेशस्य प्रजानां सुखसौभाग्यविषये च काम्बोजदेशे बहुविधकथाः श्रूयन्ते स्म। अतः बहवः काम्बोजदेशीयाः कोसलदेशं गत्वा वासम् आरब्धवन्तः। कोसलदेशे तादृशानां वासार्थं कोऽपि आक्षेपः न आसीत्। अतः कोसलदेशं प्रति गन्तृणां सङ्ख्या दिने दिने प्रवृद्धा।

एतस्मिन् एव कालखण्डे विचित्रवर्मा, जयसेनः, चक्रादित्यः चापि वृद्धाः जाताः। विचित्रवर्मणः ज्येष्ठः पुत्रः जयवर्मा परम्पराक्रमानुगुणं सिंहासनम् आरूढवान्। काम्बोजदेशे अपि चक्रादित्यस्य ज्येष्ठपुत्रेण सिंहासनम् आरोढव्यम् आसीत्। किन्तु सः असमर्थः व्यवहारे अनिपुणः च आसीत् इत्यतः तस्य अनुजः वरुणदत्तः पितरम् अग्रजं च कारागारे स्थापयित्वा राज्याधिकारं स्वायत्तीकृतवान्।

अदक्षस्य चक्रादित्यस्य शासनात् असन्तुष्टाः प्रजाः वरुणदत्तस्य सिंहासनारोहणं स्वागतीकृतवत्यः।

वरुणदत्तस्य सामर्थ्यं यद्यपि अधिकं, तथापि तस्मिन् गुणाः न्यूनाः। असूया-द्वेष-कोपादीनां दासः सः। प्रजानां मुखात् कोसलराज्यस्य प्रशंसां श्रुतवान् आसीत् सः। प्रजाः काम्बोजं परित्यज्य कोसलम् श्रयन्त्यः सन्ति इति जानतः तु तस्य असूया कोपः च प्रवृद्धः। 'जयसेनेन उपायनीकृतस्य हारस्य कारणतः एव कोसलराज्यस्य शासनम् उत्तमम् अस्ति' इति वरुणदत्तस्य दृढः विश्वासः आसीत्।



अतः सः तस्य हारस्य वशीकरणार्थम् उपायं चिन्तितवान्।

जयवर्मा गुणवान् समर्थः चापि। किन्तु तस्मिन् विलासप्रियता अधिका। चित्रविचित्राणां विलासमन्दिराणां निर्माणं, देशविदेशेभ्यः समागतानां नटनर्तकीनां नाट्यादिकार्यक्रमं व्यवस्थाप्य यथायोग्यम् उपायनदानम् इत्यादयः तस्य प्रीतिपात्राणि कार्याणि।

पुत्रस्य एतादृशं व्यवहारं दृष्ट्वा विचित्रवर्मा यद्यपि खेदं प्राप्नोति, तथापि 'उपदेशमात्रात् एतादृशी प्रवृत्तिः न त्यज्यते' इति जानन् सः मौनं तिष्ठति स्म।

जयवर्मणः एतां दुर्बलतां काम्बोजराजः वरुणदत्तः जानाति स्म। अतः स्वस्य इष्टस्य



साधनार्थं सः कनकलतानामिकां नर्तकीं चितवान्। सा परमसुन्दरी नृत्यकुशला च। सा अङ्गीकृतवती यत् चातुर्येण जयवर्मतः अपूर्वं हारं प्राप्य राज्ञे दत्त्वा राज्ञा दीयमानम् उपायनं स्वीकरिष्यामि इति।

महाराजः विचित्रवर्मा यद्यपि पुत्रस्य पट्टाभिषेकं कृतवान् आसीत् तथापि शासनव्यवहारे सर्वथा अनासक्तः तु न आसीत्। पुत्रस्य दौर्बल्यं सम्यक् जानन् सः, पुत्रः जयवर्मा अपि यथा न जानीयात् तथा रहसि एकं गूढचारदलं व्यवस्थापितवान् आसीत्। तच्च दलं तदा तदा तं सर्वाः वार्ताः निवेदयति स्म। एषा व्यवस्था वरुणदत्तेन सर्वथा न ज्ञाता आसीत्।

यस्मिन् दिने जयवर्मा सिंहासनम् आरूढवान् तस्मिन् एव दिने तम् अपूर्वं हारं तस्मै दत्तवान् आसीत् विचित्रवर्मा। सिंहासनारोहणसमये दत्तः स च हारः सर्वदा जयवर्मणः कण्ठे शोभते स्म।

वरुणदत्तेन प्रेषिता कनकलता यदा कोसलदेशे पदं स्थापितवती तदा एव विचित्रवर्मणा एषा वार्ता ज्ञाता। तस्याः आगमनात् सन्देहं प्राप्य विचित्रवर्मा पूर्वापरं समग्रं विचारितवान्। तदा तेन वरुणदत्तस्य कुतन्त्रं ज्ञातम्।

एतां वार्तां श्रुत्वा चिन्ताक्रान्तः विचित्रवर्मा जयसेनम् आनाय्य तेन सह समालोचनं कृतवान्। उभौ अपि सम्भूय प्रतितन्त्रं निर्मितवन्तौ।

तदनुगुणम् अपूर्वहारसदृशः अपरः कृत्रिमः हारः दिनाभ्यन्तरे सिद्धः जातः। विश्वासार्हजनद्वारा स च हारः जयवर्मणः कण्ठे अतिष्ठत्। वास्तविकः अपूर्वहारः विचित्रवर्मणः कण्ठम् अभूषयत्।

ततः केषुचित् एव दिनेषु कनकलता हावभावादिभिः चातुर्येण च राजानं वशीकृतवती। कनकलतायाः नृत्यं दृष्ट्वा नितरां सन्तुष्टः राजा जयवर्मा स्वकण्ठस्थं मुक्ताहारं कनकलतायाः कण्ठे स्थापितवान्। तस्मिन् दिने मध्यरात्रे कनकलता ततः निर्गतवती।

आत्मना कृतम् अक्षम्यम् अपराधं ज्ञात्वा जयवर्मा पश्चात्तापम् अनुभवन् पितुः समीपं धावितवान्।

यदा सः आगतः तदा विचित्रवर्मा



आत्मीयेन मित्रेण जयसेनेन सह चतुरङ्गक्रीडायां निमग्नः आसीत्। जयसेनः अपि राजकुटुम्बस्य सदस्यः इव एव आसीत् इत्यतः तयोः पुरतः आत्मना कृतम् अपराधं निस्सङ्कोचं निवेद्य – 'हारस्य प्रतिप्राप्त्यर्थम् इदानीम् उपायः कोऽपि चिन्तनीयः' इति उक्तवान् जयवर्मा।

सर्वं श्रुत्वा दीर्घं निःश्वस्य विचित्रवर्मा – "वत्स ! अलं चिन्तया। सः हारः यावत् अस्मद्वंशीयानाम् अधीनः भवति तावत् तस्य महिमा तिष्ठति। यदि सः अन्यस्य हस्तं गच्छति तर्हि स्वयं महिमहीनः भविष्यति। तेन अस्माकं न काऽपि हानिः। अतः इदानीं मौनं स्थितिः एव वरम्" इति पुत्रम् उक्तवान्।

एतत् वचनं श्रुत्वा जयवर्मा जयसेनश्चापि नितराम् आश्चर्यचकितौ। 'हारः अन्यस्य लाभाय न भवति' इति ज्ञातवतः जयवर्मणः चिन्ता तु अपगता। किन्तु 'मत्कारणतः स च अपूर्वः हारः हस्तच्युतः अभवत्' इति खेदः तु तस्य अन्तरङ्गे आसीत् एव। सः पितरं किमपि वक्तुम् उद्युक्तः।

तदा विचित्रवर्मा एव पुनः उक्तवान् – "रसिकहृदयाः राजानः कलाभिमानेन कलाविदां कौशलदर्शनेन च सन्तोषं प्राप्य यथायोग्यं सत्कारं कुर्युः। किन्तु न कदापि आत्मविस्मृतिं प्राप्नुयुः, न वा अनुचितकार्यं कुर्युः। कनकलताप्रसङ्गात् भवता एषः विषयः स्वयं ज्ञातः स्यात् अपि। तथापि कर्तव्यबुद्ध्या अहं वदन् अस्मि। राजा सदापि प्रजानां हितार्थं मनः केन्द्रीकुर्यात्, न तु स्वसुखार्थम्। कमलदलस्थं जलम् इव व्यवहरन् सः विलाससुखम् अनुभवेत्। एषः राज्ञः धर्मः। अस्तु तावत्, यत् प्रवृत्तं तद्विषये अधिकचिन्ताम् अकुर्वन् भवान् कर्तव्ये मनः प्रवर्तयतु" इति।

जयवर्मा पश्चात्तापं खेदं च अनुभवन् शिरः अवनमय्य मौनं ततः निर्गतवान्। तस्य निर्गमनानन्तरं जयसेनस्य मुखे दृश्यमानं प्रश्नभावम् अवगच्छन् उक्तवान् विचित्रवर्मा – "मित्र जयसेन ! मया किमर्थम् असत्यम् उक्तम् इति खलु भवतः प्रश्नः ? तस्य उत्तरम् अनन्तरं कथयिष्यामि। ततः पूर्वं भवान् एव वदतु – जयवर्मतः तं हारं प्राप्तुम् आवां किमर्थं त्वरया योजनां कृतवन्तौ इति"

इति।

जयसेनः एतस्य उत्तरं किमपि अवदन् मौनं स्थितवान्।

तदा विचित्रवर्मा पुनः उक्तवान् - "यदि हारः जयवर्मणः कण्ठे तिष्ठेत् तर्हि सः नर्तक्याः कपटतां कुतन्त्रनिरततां च अवश्यं जानीयात् एव। तदा वञ्चनया हारस्य प्राप्तिः एव न अभविष्यत्। एतत्सर्वं काम्बोजराजः अपि जानाति एव। तथापि सः कार्यप्रवृत्तः आसीत्। अतः एव वयम् उपायेन जयवर्मकण्ठतः हारं दूरीकृतवन्तः। एतत्सर्वं किमर्थं प्रवृत्तम्? जयवर्मणः मनोदौर्बल्यात्, अविचिन्त्य व्यवहारात् च। मनोदौर्बल्यवान् कदाचित् विद्यमानायाः मेधाशक्तेः उपयोगम् अपि न करोति। अतीन्द्रियशक्तेः उपयोगं स्वीकर्तुम् अपि सः न अर्हति। अविवेकी अपि वरुणदत्तः एतम् अंशं सम्यक् अवगतवान् अस्ति। अतः एव सः कनकलताम् अत्र प्रेषयन् जयवर्मणः दुर्बलतां वर्धयित्वा हारं वशीकर्तुं प्रयत्नं कृतवान्" इति।

राज्ञः विचारम् अङ्गीकुर्वन् जयसेनः मौनं शिरः चालितवान्।

विचित्रवर्मा हसन् पुनः उक्तवान् - "यथा मम तथा भवतः अपि जयवर्मणि अधिकप्रीतिः अस्ति इति अहं जानामि। सकृत् अपराधं कृत्वा पश्चात्तापम् अनुभूय विवेकं प्राप्तवान् जयवर्मा इतः परं जागरूकतया एव व्यवहरिष्यति इति, अपूर्वः हारः तस्मै दत्तः चेत् न काऽपि हानिः



इति च भवतः चिन्तनं स्यात्। किन्तु दिने दृष्टे कूपे रात्रौ न पतनीयम् इति मम अभिप्रायः। एतस्याः घटनायाः परिणामतः जयवर्मणि परिवर्तनं भवेत्, न भवेत् अपि। एवं स्थिते सकृत् कृतः दोषः पुनः किमर्थं करणीयः? इदानीं जयवर्मा वरुणदत्तः चापि निर्णीतवन्तौ स्तः यत् वास्तविकः अपूर्वहारः शक्तिहीनः जातः अस्ति इति। अतः तौ इतः परम् एतद्विषये कदापि न चिन्तयतः। एवं तर्हि हारः किं क्रियते इति प्रश्नः स्यात् भवतः मनसि। तदर्थम् अपि मार्गः चिन्तितः अस्ति मया। मद्वंशे कश्चन महात्मा जन्म प्राप्स्यति खलु? सः जयवर्मणः पुत्रः, पौत्रः, प्रपौत्रः, प्रपौत्रपुत्रः, तदनन्तरं जातः कश्चित् वा भवेत् नाम। सः एतस्य हारस्य, हारद्वारा

प्राप्यमाणायाः सम्पत्तेः च उत्तराधिकारी भविष्यति'' इति।

महाराजस्य राजनीतिनिपुणतां धर्ममार्गानुयायितां च मनसा अङ्गीकुर्वन् जयसेनः मौनं शिरश्चालनपूर्वकम् एतद्विषये अङ्गीकारं सूचितवान्।

विचित्रवर्मणा यथा ऊहितं तथैव प्रवृत्तम् । 'अपूर्ववैशिष्ट्यशाली हारः शक्तिहीनः जातः' इति वार्ता वरुणदत्तेन अपि प्राप्ता । 'अहो, दौर्भाग्यम् !' इति चिन्तयन्, 'अहो, मम तन्त्रं विफलं जातम्' इति महान्तं खेदं च अनुभवन् सः मौनम् आश्रितवान्।

प्रवृत्तस्य विषये नितरां खिन्ने जयवर्मणि महत् परिवर्तनं दृष्टम्। सः विलासमयजीवने क्रमशः आसक्तिं न्यूनीकुर्वन् कर्तव्येषु कार्येषु अधिकश्रद्धां प्रदर्शितवान् । कोसलदेशस्य प्रजाः तस्मिन् आदरवत्यः जाताः।

एतत् सर्वं दृष्ट्वा तृप्तिम् अनुभवन् विचित्रवर्मा केषाञ्चित् वर्षाणाम् अनन्तरं परलोकं गतवान् । ततः अल्पे एव काले जयसेनः अपि दिवं गतः।

स्वस्य मरणात् पूर्वं जयसेनः जयवर्माणम् एकान्ते दृष्ट्वा अपूर्वशक्तिशालिनः हारस्य विषये प्रवृत्तं समग्रं निवेद्य - ''वत्स ! भवति जातं सत्परिवर्तनं दृष्ट्वा अहं महाराजं तदा तदा वदामि स्म - हारः भवते दातव्यः इति। किन्तु न जाने किं कारणम् इति, महाराजः मम प्रार्थनां कदापि न अङ्गीकृतवान्। सः मां वदति स्म - 'मम निर्णयः उचितः इत्येव भाति मम। सः हारः मद्वंशीयेन केनचित् प्राप्यते एव। अतः जयवर्मणा स च हारः न प्राप्तः चेदपि राजवंशस्य हानिः तु सर्वथा न भवति। अतः अलं चिन्तया' इति। स च हारः कुत्र स्थापितः इति विषयः महाराजेन मरणकाले अपि न उक्तम्। मरणात् पूर्वम् एकं पत्रं लेखयित्वा मां सः उक्तवान् आसीत् यत् एतत् पत्रं भवतः मरणकाले मत्पुत्राय ददातु इति। तत् पत्रं स्वीकरोतु तावत्'' इति उक्त्वा एकां दन्तनिर्मितां पेटिकां जयवर्मणे दत्तवान् आसीत्।

- (अनुवर्तते)





# अपूर्वं स्फटिकम्

आरब्धे कार्ये सिद्धिं प्राप्तुम् इच्छन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान् । वृक्षस्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य मौनं श्मशानाभिमुखं प्रस्थितवान् च । तदा शवान्तर्गतः वेतालः अवदत् - "अये राजन् ! अस्मिन् भीकरे श्मशाने मध्यरात्रसमये भवान् महान्तं श्रमम् अनुभवन् अस्ति यत्, तत् प्रशंसार्हम् एव । किन्तु एतावन्तं श्रमं कृत्वा भवता किं साधनीयम् अस्ति इति तु मया न ज्ञायते । असाध्ये कार्ये भवान् केनापि प्रेरितः स्यात् वा इति मम संशयः । यदि मम चिन्तनं समीचीनं स्यात् तर्हि भवतः श्रमः समुद्रे वृष्टिरिव व्यर्थः भविष्यति । एतस्य निदर्शनार्थं महाराजस्य चन्द्रसेनस्य कथां श्रावयामि । श्रद्धया शृणोतु, येन भवतः मार्गायासः परिहृतः स्यात्" इति ।

अनन्तरं वेतालेन कथा आरब्धा -

पूर्वं चन्द्रसेननामकः राजा द्विचक्रपुरं

## वेतालकथा




पालयन् आसीत् । सः कदाचित् मृगयार्थम् अरण्यं गतवान् । तत्र मार्गभ्रष्टः अतीव श्रान्तः च राजा अतीव पिपासितः जातः । पिपासानिवारणार्थं सः इतस्ततः अटन् कश्चित् आश्रमं प्राप्तवान् । तस्मिन् आश्रमे प्रदीपनामकः मुनिवर्यः आसीत् । प्रदीपः महाराजं सत्कृत्य तस्य पिपासां निवारितवान्, आश्रयं दत्तवान् च ।

अनन्तरं राजा चन्द्रसेनः - "अहं महाराजः चन्द्रसेनः । भवान् कः ? अस्मिन् अरण्ये भवान् कतिभ्यः वर्षेभ्यः वासं कुर्वन् अस्ति ?" इति कुतूहलेन पृष्टवान् ।

तदा प्रदीपः उक्तवान् - "कस्मिंश्चित् काले अहम् अपि राजा एव आसम् । मम नाम प्रदीपः । मम राज्ये प्रजाः अपराधं चौर्यं वा यदि कुर्वन्ति तर्हि ताः सम्यक् दण्डयामि स्म अहम् । एवं सति कदाचित् अहं तीव्रं रोगपीडितः अभवम् । केनापि औषधेन मम रोगः न शान्तः । कदाचित् मां द्रष्टुं हिमालयतः कश्चित् महानुभावः आगतवान् । सः माम् उक्तवान् यत् - भवान् प्रजाभ्यः अपराधानुगुणं दण्डं न विहितवान्, अपि तु अपराधिनां हिंसां कृतवान् । तस्मात् पापकारणात् एव भवतः आरोग्यं नष्टम् अस्ति । अरण्यं गत्वा तपः करोतु । तेन भवान् पापमुक्तः भविष्यति इति । केचन मासाः अतीताः । अहं मम राज्यं मम अनुजाय समर्प्य पत्न्या सह अरण्यम् आगतवान् । एकस्य वर्षस्य तपसः फलेन मम व्याधिः शान्तः । तावता मयि राज्यभोगविषयिकी आशा अपि न्यूना जाता । एकं वर्षं यावत् राज्यं पालितवान् मम अनुजः राजभोगविषये अतीव आसक्तः सन् 'अहं पुनः राज्यं वशीकुर्याम्' इति भयेन मम मारणार्थं द्वौ भटौ प्रेषितवान् । तेन प्रेषितौ भटौ मम समीपम् आगत्य मां मारयितुम् अनिच्छन्तौ वस्तुस्थितिम् उक्तवन्तौ । अनन्तरं गतवन्तौ च । तदारभ्य अहम् एकैकं वर्षम् एकैकस्मिन् अरण्ये यापयन् अस्मि । मां मारयितुम् आगतौ भटौ राजधानीं गत्वा मम अनुजम् उक्तवन्तौ यत् - भवतः अग्रजः क्रूरमृगैः भक्षितः इति । सः तत् सत्यम् इत्येव विश्वसितवान् । अहं कानिचन दिनानि एव अत्र तिष्ठामि । अनन्तरं हिमालयं गमिष्यामि" इति ।

प्रदीपस्य एतानि वचनानि श्रुत्वा राजा चन्द्रसेनः आश्चर्यचकितः। किञ्चिदिव भीतः अपि। अनन्तरं सः ससन्देहं प्रदीपं पृष्टवान् - "स्वामिन्! अपराधिनां विषये मम द्वेषः तु नास्ति। किन्तु यदि तान् कठोरं न दण्डयेम, तर्हि सामान्यजनानां कष्टं भवति खलु! एतद्विषये मया कथं व्यवहरणीयम्? मया अपि रोगपीडितेन सता राज्यस्य त्यागः करणीयः भवति वा?" इति।

तदा प्रदीपः उक्तवान् - "पापानि सर्वान् अपि समानरीत्या न बाधन्ते। जीवने मया अन्यानि अपि बहूनि पापानि आचरितानि आसन्। तैः सह एतत् अपि पापम् आसीत् इति कारणतः अहं रोगपीडितः जातः। भवान् भीतः मा भवतु। अहं भवते एकं स्फटिकं दास्यामि। तत् स्फटिकं न्यायनिर्णये भवतः साहाय्यं करिष्यति" इति।

अनन्तरं प्रदीपः स्फटिकं चन्द्रसेनाय दत्तवान्। तस्य स्फटिकस्य वैशिष्ट्यं यत् - तत् स्फटिकं हस्तेन गृहीत्वा न्यायनिर्णयः क्रियते चेत् अपराधस्य योग्यं दण्डनं यदि जातं स्यात्, तर्हि तत् स्फटिकम् अनुक्षणं पीतवर्णं प्राप्नोति। दण्डनं यदि अधिकं जातं स्यात्, तर्हि स्फटिकं रक्तवर्णेन परिणमति। दण्डनं न्यूनं चेत् स्फटिकं कृष्णवर्णं प्राप्नोति।

अनन्तरं प्रदीपः पुनः उक्तवान् - "तपश्शक्त्या एतत् स्फटिकं प्राप्तवान् अहम्। हिमालयगमनात् पूर्वं कस्यचित् देशस्य महाराजाय एतत् स्फटिकं ददामि इति चिन्तयन् आसम् अहम्। स्फटिकप्राप्तेः भाग्यं भवतः एव आसीत्। एतस्य स्फटिकस्य साहाय्येन न्यायनिर्णयं कुर्वन्, सम्यक्





अपराधस्य योग्यं दण्डनं किम् इति ज्ञातुं राजा चन्द्रसेनः न शक्नोति स्म।

स्फटिकप्राप्तिविषये राजा कमपि न उक्तवान् आसीत्। अन्ये यथा न जानीयुः तथा राजा स्फटिकद्वारा बहून् परीक्षितवान् आसीत्। तेषु न्यायशास्त्रनिपुणाः प्रकाण्डपण्डिताः, विविधक्षेत्रेषु प्रख्याताः चापि आसन्। किन्तु तेषु कोऽपि स्वन्यायनिर्णयेन स्फटिकं पीतवर्णं कर्तुं न शक्तवान् आसीत्। एतत् सर्वं दृष्टवतः राज्ञः मनसि महत् आश्चर्यम्। योग्यः न्यायनिर्णयः न हि सुलभसाध्यः इति सः ज्ञातवान्।

राजा चन्द्रसेनः स्फटिकं सर्वदा स्वसमीपे एव स्थापयति स्म। कदाचित् सः वेषान्तरं. धृत्वा नगरसञ्चारं कुर्वन् आसीत्। तस्मिन् समये दरिद्रः इव दृश्यमानः कश्चित् एकं धनस्यूतं कस्मैचित् धनिकाय यच्छन् दृष्टः। धनस्यूतदानसमये दरिद्रः अश्रूणि स्रावयन् आसीत्। एतत् दृष्टवतः महाराजस्य चन्द्रसेनस्य मनसि संशयः उत्पन्नः यत् - धनिकः इव यः अस्ति सः वञ्चकः इति।

चन्द्रसेनः अनुक्षणं तयोः समीपं गत्वा - ''भवतोर्मध्ये कः व्यवहारः ?'' इति तर्जनपूर्वकं पृष्टवान्।

तदा दरिद्रः उक्तवान् - ''एषः मम साहाय्यं करोति। अतः सञ्चितं धनं सर्वम् एतस्मै यच्छन् अस्मि'' इति।

एतत् श्रुत्वा राजा पृष्टवान् - ''भवान् कीदृशं साहाय्यम् इच्छति ?'' इति।

तदा सः दरिद्रः उक्तवान् - ''मम चत्वारः

राज्यपालनं करोतु'' इति।

राजा चन्द्रसेनः तत् स्फटिकं स्वीकृत्य राजधानीं प्रतिगतवान्। एतावत्पर्यन्तं सः एव अपराधिनां विचारणं करोति स्म। स्फटिकप्राप्त्यनन्तरं पञ्च न्यायशास्त्रनिपुणान् न्यायाधिकारिरूपेण नियोजितवान् सः। अपराधिनां विचारणानन्तरं पञ्च न्यायशास्त्रनिपुणैः सह अपि वैयक्तिकरूपेण समालोचनं करोति स्म सः। अन्ते स्फटिकं कृष्णवर्णीयम् अस्ति चेत् एव दण्डनं विदधाति स्म।

किन्तु आश्चर्यं नाम तत् स्फटिकं न्यायनिर्णयसमये सर्वदा रक्तवर्णं वा कृष्णवर्णं वा दर्शयति स्म। कदापि पीतवर्णेन न परिणमति स्म। अतः यस्य कस्यापि

पुत्राः सन्ति । कदाचित् मम गृहं प्रति भिक्षार्थम् आगतः कश्चित् महानुभावः उक्तवान् अस्ति यत् – मम चतुर्षु पुत्रेषु एकः महाज्ञानी भविष्यति, तदर्थं तस्य विद्याभ्यासव्यवस्था करणीया इति। चतुर्षु पुत्रेषु कः महाज्ञानी भविष्यति इति मया पृष्टे सत्यपि सः महानुभावः न उक्तवान्। 'एतं विषयं स्वयं ज्ञास्यति भवान्' इत्युक्त्वा गतवान् एव सः। चतुर्णाम् अपि पुत्राणां विद्याभ्यासव्यवस्थां कर्तुं न शक्नोमि अहम्। तावती शक्तिः नास्ति मम। अतः तेषु चतुर्षु ज्ञानी कः इति ज्ञातव्यं खलु! तदर्थम् एतस्य धनिकस्य साहाय्यं प्रार्थितवान् अहम्'' इति।

एतत् सर्वं श्रुत्वा राजा धनिकतः धनं दरिद्राय दापयित्वा उक्तवान् – ''गच्छतु। भवदिष्टं साहाय्यम् अहं करिष्यामि'' इति।

तौ उभौ अपि दरिद्रस्य कुटीरं गतवन्तौ। तस्मिन् समये दरिद्रस्य पुत्राणां मध्ये वादः प्रचलति स्म।

वादस्य कारणं तु एतत् – दरिद्रस्य चत्वारः अपि पुत्राः मिलित्वा मृत्तिकया एकां पाञ्चालिकां निर्मितवन्तः आसन्। तावता तत्र आगतः चन्द्रनामकः प्रतिवेशी उद्देशपूर्वकं तां पाञ्चालिकां भञ्जयित्वा गतवान्। एतस्मात् कुपिताः ते चत्वारः अपि सहोदराः तम् अनुसरन्तः तस्य गृहं गत्वा बलात् तं स्वगृहम् आनीतवन्तः। इदानीं सः चन्द्रः केन प्रकारेण दण्डनीयः इति विषये तत्र महान् वादः आरब्धः अस्ति।

एतत् सर्वं दृष्ट्वा राजा चन्द्रसेनः चिन्तितवान् – 'महानुभावस्य कथनानुसारं





दरिद्रस्य चतुर्षु पुत्रेषु कश्चित् ज्ञानी स्यात् एव। स च ज्ञानी कः इति निर्णेतुम् एषः एव उत्तमः अवकाशः। इदानीं अपराधी चन्द्रः केन प्रकारेण दण्डनीयः इति चतुर्भिः अपि स्वाभिप्रायः उच्यते। तेन एव ज्ञानी कः इति निर्णेतुं शक्यते' इति।

अनन्तरं चन्द्रसेनः स्फटिकं मुष्टौ गृहीत्वा दरिद्रस्य ज्येष्ठपुत्रम् उक्तवान् - "चन्द्रः कथं दण्डनीयः ? वदतु" इति।

तदा ज्येष्ठः पुत्रः उक्तवान् - "कशया शतवारं ताडनीयः एषः" इति।

एतत् श्रुत्वा राजा स्फटिकं दृष्टवान्। स्फटिकं रक्तवर्णेन परिणतम् आसीत्। अनन्तरं राजा अन्यान् पृष्टवान्।

"चन्द्रसमीपे याः पाञ्चालिकाः सन्ति, ताः सर्वाः अपि भञ्जनीयाः" इत्युक्तवान् द्वितीयः पुत्रः।

तदापि स्फटिकं रक्तवर्णेन परिणामं प्राप्नोत्।

तृतीयः पुत्रः उक्तवान् - "चन्द्रस्य सकाशात् एतादृशीम् एव पाञ्चालिकां कारयित्वा अनन्तरं सा भञ्जनीया" इति।

तदा स्फटिकं कृष्णवर्णेन परिणतम्।

अनन्तरं चतुर्थः पुत्रः उक्तवान् - "चन्द्रः येन केनापि प्रकारेण दण्डितः चेत् अपि न किमपि प्रयोजनम्। यतः भग्ना पाञ्चालिका पुनः समीकर्तुं न शक्यते एव। मम यदि सामर्थ्यं स्यात् तर्हि सः स्वापराधं स्वयं यथा जानीयात् तथा कुर्याम् अहम्" इति।

आश्चर्यं नाम महाराजस्य हस्तस्थं स्फटिकं पीतवर्णं प्राप्नोत्। अनुक्षणं राजा निर्णीतवान् - 'दरिद्रस्य चतुर्थः पुत्रः एव भाविकाले महाज्ञानी भविष्यति' इति। अनन्तरं राजा चन्द्रसेनः दरिद्रं स्वपरिचयम् उक्त्वा - 'अहं भवतः कुटुम्बनिर्वहणार्थं धनसाहाय्यं करिष्यामि' इति उक्तवान्।

'दरिद्रस्य चतुर्थपुत्रस्य विद्याभ्यास-व्यवस्थां स्वयम् एव निर्वहामि अहम्' इति विचिन्त्य राजा चन्द्रसेनः चतुर्थं पुत्रम् आत्मना सह राजधानीं नीतवान्।

वेतालः एवं कथां समाप्य अवदत् - "अयि राजन् ! दरिद्रस्य चतुर्थपुत्रस्य अभिप्रायश्रवणानुक्षणं स्फटिकं पीतवर्णं प्राप्नोत् इति यत् तत् तु काकतालीयम् इति भाति। यतः सार्वकालिकं योग्यं दण्डनम्

इति नास्ति एव। अतः महाज्ञानी वा भवतु, न्यायशास्त्रे निपुणः वा भवतु, सः कालानुगुणम् एव न्यायनिर्णयं करोति । कस्मिंश्चित् कालखण्डे युक्तं दण्डनं कालान्तरे अयुक्तं भवेत् । अतः प्रदीपेन महाराजाय चन्द्रसेनाय यत् स्फटिकं दत्तं तत् प्रयोजनरहितम् इति भासते खलु ! एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः उक्तवान् - ''कालानुगुणं दण्डनपद्धतिः परिवर्तते इत्यत्र न कोऽपि सन्देहः । महाराजस्य चन्द्रसेनस्य समस्या दण्डनपद्धतेः परिवर्तनं, तत्र नूतनतया किमपि योजनं वा न । 'अहं मम राज्यपालनसमये दण्डनपद्धत्यनुगुणम् एव न्यायनिर्णयं कुर्वन् अस्मि वा न वा' इत्येव तस्य समस्या आसीत् । मुनिः प्रदीपः स्वतपश्शक्त्या यत् स्फटिकं सृष्टवान् तत् कालातीतम्। तच्च स्फटिकं यस्मिन् कस्मिन् काले वा भवतु, यस्यां कस्याञ्चित् परिस्थितौ वा भवतु न्यायनिर्णयं कर्तुं समर्थम् अस्ति । किन्तु स्वयं न्यायनिर्णयं श्रावयितुम् असमर्थम् इति कारणतः तस्य ज्ञानिनः साहाय्यम् आवश्यकम्। न्यायशास्त्रे परिणताः अपि वैयक्तिकलाभकारणतः योग्यदण्डनं न कुर्युः अपि। किन्तु ज्ञानी तथा न । सः वस्तुस्थितिं जनानां व्यवहारं च सम्यक् परिशीलयति । तदनुगुणम् एव न्यायनिर्णयं करोति । एतैः कारणैः एव एकस्य अपराधस्य सर्वत्र समानदण्डनम् इति विषयं ज्ञानी न अङ्गीकरोति। अतः चन्द्रसेनः वस्तुतः यः ज्ञानी अस्ति, तादृशस्य साहाय्येन प्रदीपमुनिना दत्तं स्फटिकं न्यायनिर्णये उपयुङ्क्ते। दरिद्रस्य चतुर्थपुत्रेण यदा निर्णयः श्रावितः, तदा स्फटिकं पीतवर्णेन परिणतम् इति यत् तत् काकतालीयं न'' इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



# विस्मृतिः

गङ्गाधरः प्रभाते एव स्नानार्थं तटाकं प्रति प्रस्थितवान् आसीत्। मध्येमार्गं पार्श्वग्रामस्थः शिवशङ्करः मिलितवान्। सः गङ्गाधरं पृष्टवान् - ''एतेषु दिनेषु त्रिवारं भवतः गृहे चौर्यम् अभवत् इति श्रुतवान् अहम्। सत्यं वा ?'' इति।

''आम्, सत्यम्'' इति सविषादम् उक्तवान् गङ्गाधरः।

''चोरैः अयसः पेटिकायाः ताडनसमये अपि भवतः जागरणं न अभवत् वा ?'' इति पुनः पृष्टवान् शिवशङ्करः।

''प्रथमवारं तु मम जागरणं न अभवत्। द्वितीयसन्दर्भे चोराः मम मञ्चस्थस्य उपधानस्य अधः विद्यमानां कुञ्चिकां विना शब्दं स्वीकृत्य मम धनकनकादिकं सर्वं नीतवन्तः'' इति उक्तवान् गङ्गाधरः।

तदा शिवशङ्करः - ''भवान् सर्वदा उपधानस्य अधः कुञ्चिकां मा स्थापयतु। अन्यत्र कुत्रापि स्थापयतु'' इति उक्तवान्।

''अनन्तरसन्दर्भे तदपि कृतवान् अहम्'' इति दीर्घं निःश्वसन् उक्तवान् गङ्गाधरः।

''तर्हि कुत्र भवान् स्थापितवान् आसीत् कुञ्चिकाम् ?'' इति पृष्टवान् शिवशङ्करः।

''तस्मिन् दिने कुञ्चिकाम् अट्टे गोप्यरूपेण स्थापितवान् अहम्'' इति उक्तवान् गङ्गाधरः।

तदा शिवशङ्करः साश्चर्यं पृष्टवान् - ''एवं तर्हि चोरैः कथं प्राप्ता कुञ्चिका ?'' इति।

तदा - ''किं वदामि ? मम विस्मरणकारणतः एव मम सर्वनाशः अभवत्। कुञ्चिकां कुत्र स्थापितवान् इति अहं विस्मरामि इत्यतः 'अयसः पेटिकायाः कुञ्चिका अट्टे अस्ति' इति चिटिकायां विलिख्य, तां चिटिकाम् उपधानस्य अधः स्थापयित्वा शयनं कृतवान् आसम्'' इति उक्तवान् गङ्गाधरः।

'त्रिवारम् अपि चोराः कथं सुलभतया चौर्यं कृतवन्तः इति ज्ञातवान् शिवशङ्करः।



अस्मद्देशीयाः वृक्षाः

# पनसः




फलजातिषु एव महत् फलं पनसम् । पनसफलं सामान्यतः १० से.मी. दीर्घं, ४० से.मी. स्थूलं च भवति । तेलुगुभाषया मराठिभाषया च एतत् 'पनस' इति, 'पनास्' इति च कथ्यते । कन्नडभाषया एतत् 'हलसु' इत्युच्यते । काभिश्चित् दक्षिणभारतीयभाषाभिः एतत् 'चक्का' इति उच्यते । 'चक्का' इत्यतः एव आङ्ग्लभाषायां 'जाक्' (Jack) इति नाम आगतं स्यात् इति जनाः तर्कयन्ति ।

ग्रीक्देशस्य सुप्रसिद्धः इतिहासकारः थियोफ्राटस्महाशयः (क्रि.पू. ३०० तमे) पनसफलविषये एवं लिखितवान् - 'भारतदेशे संन्यासिभिः खाद्यमानम् एतत् मधुरफलम् महावृक्षेषु जायते' इति । चतुर्दश-शतकस्य इटलीदेशस्य यात्रिकः मारिगौनोल्लीमहोदयः उक्तवान् यत् - 'पनसफलं तावत् बृहत् भवति, यत् तत् अजशावकगात्रम् अपि अतिशेते' इति ।

पनसवृक्षः सर्वदा हरितायमानः एव तिष्ठति । एषः वृक्षः सामान्यतः १५ मीटर् परिमितम् अपि उन्नतः भवति । अस्माकं देशस्य पश्चिमभागेषु, उत्तरप्रदेशे, बिहारप्रभृतिषु राज्येषु चापि पनसवृक्षाः वर्धन्ते । प्रधानतया जनाः एतान् वृक्षान् छायानिमित्तं वर्धयन्ति । सामान्यप्रदेशस्थानां पनसवृक्षाणाम् अपेक्षया अपि सिकतामयप्रदेशस्थानां पनसवृक्षाणां पनसफलानि आकारेण बृहन्ति भवन्ति ।

एतस्य पर्णानि विशालानि, हरिद्वर्णानि, स्थूलानि च भवन्ति । शैत्यकाले पनसवृक्षेषु गुच्छरूपेण पुष्पाणि विकसन्ति । एतेषां पुष्पाणां रक्षकं स्थूलम् आवरणं भवति । किन्तु बहुकालं न तिष्ठति एतत् आवरणम् । पनसवृक्षेषु शाखानां मध्यभागेषु, काण्डभागस्य समीपे च फलानि वर्धन्ते । पक्वसमये मधुरं सुगन्धं प्रसारयन्ति एतानि फलानि । पनसफलानि आरम्भे हरिद्वर्णीयानि भवन्ति, अनन्तरं च पीतवर्णीयानि भवन्ति । पूर्णं पक्वं यदा भवति, तदा धूसरवर्णेन परिणमति एतत् फलम् । किञ्चिद् दीर्घाकारस्य गोलाकारस्य च एतस्य फलस्य भारः सामान्यतः २० - ३० किलोग्राम् । पनसफलस्य उपरिभागः स्थूलः कण्टकमयश्च भवति । अन्तर्भागः मधुरः । फलस्य अन्तः श्वेतबीजानि भवन्ति । सामान्यतः पनसफलानि मार्च्मासे फलितानि भवन्ति, जून्पर्यन्तम् अपि तिष्ठन्ति । अपक्वपनसेन व्यञ्जनम् अपि कर्तुं शक्यते । पनसफलस्य रुचिः अतीव मधुरा ।

वातायनस्य द्वारस्य कपाटिकायाश्च निर्माणे पनसकाष्ठस्य उपयोगः क्रियते । पीतवर्णीयम् अपि एतस्य काष्ठं गच्छता कालेन कृष्णवर्णं भवति । अनन्तरं च परिष्कारकारणतः उज्ज्वलां कान्तिं प्राप्य देवदारुवृक्षवत् शोभते ।




## खुरान्ग्रन्थः

इस्लांमतस्य प्रवर्तकः प्रवादी महम्मदः अरेबियादेशस्थे मेक्कानगरे क्रि.श. ५७० तमे वर्षे जन्म प्राप्तवान्। सः बाल्ये उष्ट्रस्य उपरि उपविश्य प्रयाणं कुर्वन् विविधान् प्रदेशान् अटन् वाणिज्यं कृतवान्। केषाञ्चित् दिनानाम् अनन्तरं सः चिन्तितवान् यत्–मद्द्वारा प्रजाभ्यः सन्देशः प्रापणीयः इति दैवसङ्कल्पः अस्ति इति, एतस्य महतः कार्यस्य उत्तरदायित्वं मम अस्ति इति च। अनन्तरं सः न्यायमार्गेण जीवनं यापयितुम् आवश्यकानि नैतिकसूत्राणि देवतः प्राप्य, प्रजाः बोधितवान्। ते एव अंशाः खुरान्ग्रन्थे प्रकटिताः सन्ति।

'इस्लाम्' इत्यस्य अर्थः दैवे विश्वासः शान्तिः च इति। तन्नाम यः दैवे विश्वसिति सः शान्तिं प्राप्नोति इत्यर्थः। ये 'इस्लाम्'मते विश्वसन्ति, ते यवनाः इति, महम्मदीयाः इति वा आहूयन्ते।

महम्मदीयानां पवित्रः ग्रन्थः खुरान्। देवः एकः एव इति सिद्धान्तं बोधयति एषः ग्रन्थः। खुरान्ग्रन्थे एवं निरूपितम् अस्ति – 'भगवान् सर्वव्यापी। सर्वाः अपि दिशः भगवतः एव। भवान् येन केनापि मार्गेण गच्छति चेत् अपि अन्ते भगवन्तम् एव प्राप्नोति। सः सर्वान्तर्यामी, सर्वज्ञः च' इति।

खुरान्ग्रन्थस्य आरम्भे एव 'भगवतः इच्छानुसारं व्यवहारः एव श्रेष्ठः' इति विषये एवं लिखितम् अस्ति -

परमकरुणामयस्य देवस्य (अल्ला) नाम्नि –
सः एव सर्वस्य अपि अधिकारी। सः परमकारुणिकः, दयामयः च।
भगवन्! अद्य न्यायनिर्णयाधिकारी भवान् एव।
अतः वयं भवन्तम् एव प्रार्थयामः, न अन्यम्।

साहाय्यार्थं भवन्तम् एव याचामः।
अस्मान् सन्मार्गे प्रवर्तयतु।
भवति विश्वस्य ये भवत्करुणापात्रं जाताः, तैः येन मार्गेण गतं तेन मार्गेण अस्मान् गमयतु।
ये भवतः अप्रियं कृतवन्तः तैः अनुस्रियमाणे मार्गे मा प्रवर्तयतु।
खुरान्ग्रन्थे ज्ञानार्जनस्य न्यायस्य च विशिष्टं स्थानम् अस्ति। 'जन्मनः आरभ्य मरणपर्यन्तं निरन्तरं ज्ञानार्जनं करणीयम्' इति उपदिशति खुरान्ग्रन्थः।
अस्माकम् आधुनिकः तन्त्रज्ञः भारतीयपण्डितः असघर् अली एवम् उक्तवान् - ''प्रपञ्चे किमपि मतं द्वेषदुरभिमानादिकं न प्रचोदयति, अपि तु द्वेषादिकं दूरीकर्तुं प्रयत्नं करोति। सर्वेषाम् अपि मतानाम् आशयः एतावान् एव यत् - सर्वैः अपि प्रीत्या न्यायेन शान्त्या च जीवनं करणीयम् इति। इस्लांमतम् अपि एतम् एव आशयं पोषयति। 'ये इस्लांमतस्य विरोधं कुर्वन्ति, तेषां साहाय्यं च ये कुर्वन्ति, तेषां विषये हिंसात्मकः व्यवहारः स्यात्' इति खुरान्ग्रन्थस्य कासुचित् सूक्तिषु अस्ति। एतासां सूक्तीनाम् अर्थः चारित्रिकसन्दर्भानुगुणं ग्रहीतव्यः। कस्मिंश्चित् कालखण्डे प्रतिपादिताः ते विचाराः तत्काले अनुसरणयोग्याः आसन्। इतराः सूक्तयः इव ताः सूक्तयः न सार्वकालिकाः।''



# भवन्तः जानन्ति वा ?

१. स्वतन्त्रस्य केन्यादेशस्य प्रथमः प्रधानमन्त्री कः आसीत् ? अध्यक्षश्च कः आसीत् ?
२. अस्माकं देशस्य अतिविशालं नगरं किम् ?
३. मध्यधरासमुद्रस्थः त्रिभुजाकारकः द्वीपः कः ?
४. 'सहस्रदेवालयद्वीपः' इति नाम्ना प्रख्यातः इण्डोनेषियादेशस्थः द्वीपः कः ?
५. प्रपञ्चे अत्युन्नतप्रदेशस्थः देशः कः ?
६. त्रिहृदययुक्तः कीटः कः ?
७. बर्लिन्भित्तेः निर्माणं कदा अभवत् ? कदा च तस्य पतनम् अभवत् ?
८. आग्नेयेशियाप्रदेशस्थस्य कस्य देशस्य राजधानी 'अयूध्या' आसीत् ?
९. अब्रहां-लिङ्कन्महोदयस्य पत्न्याः नाम किम् ?
१०. कौ दम्पती इंग्लेण्डदेशं सम्भूय पालितवन्तौ ?
११. प्रपञ्चस्य तत् नगरं किं, यस्मिन् जनसंख्या अत्यधिका अस्ति ?
१२. इदानीम् अमेरिकादेशस्य राजधानी वाशिङ्गटन् । पूर्वं तस्य राजधानी का आसीत् ?
१३. दन्तहीनः कीटः कः ?
१४. बार्सिलोना स्पेयिन्देशस्य किञ्चन नगरम् । दक्षिण-अमेरिकादेशे अपि 'बार्सिलोना' इति नगरम् अस्ति । तच्च नगरं कुत्र अस्ति ?
१५. पूर्वतनकाले आलुकस्य वर्धनं कुत्र भवति स्म ?
१६. टाञ्जानियास्थे मान्यारा-राष्ट्रियोद्याने आफ्रिकादेशीयः कः मृगः अधिकसंख्यायाम् अस्ति ?

## उत्तराणि

१. जोमो, कीन्याटा ।
२. कलकत्ता ।
३. सिसिलिद्वीपः ।
४. बालिद्वीपः ।
५. स्विजर्ल्याण्ड् ।
६. कटिल्फिष्नामकः जलचरः ।
७. १९६१ तमे वर्षे ।
१९८९ तमे वर्षे ।
८. थाय्ल्याण्ड् देशस्य (सीयाम्) ।
९. मेरीटाड् ।
१०. तृतीयः विलियं, द्वितीया मेरी च ।
(१६८९-१६९४)
११. चैनादेशस्य षाङ्घाय्नगरम् ।
१२. फ़िलडेल्फिया ।
१३. 'पिपीलिकाभक्षकः' नाम कीटः ।
१४. वेनिजुलाप्रदेशे ।
१५. दक्षिण-अमेरिकादेशे ।
१६. गजः ।



# दानशूरः लक्ष्मीशः

वसन्तपुरनामके ग्रामे लक्ष्मीशनामकः कश्चित् धनिकः आसीत् । सः दानशूरकर्णः इति प्रसिद्धः आसीत् । तत् एव नाम शाश्वतं रक्षितुम् इच्छन् लक्ष्मीशः पूर्वापरम् अनालोच्य एव यथेष्टं दानादिकं कुर्वन् जीवनं यापयति स्म । सः बहुकालं यावत् दानादिकं कृतवान् इति कारणतः तदीया समग्रा सम्पत्तिः समाप्ता अभवत् । किन्तु लक्ष्मीशः कृषिकार्ये निपुणः आसीत् । अतः सः अन्येषां क्षेत्रं भाटकरूपेण स्वीकृत्य तत्र कृषिकार्यं कुर्वन् कामपि न्यूनतां विना सुखेन जीवनं यापयन् आसीत् । तथापि दानस्वभावं न परित्यक्तवान् आसीत् लक्ष्मीशः ।

कदाचित् लक्ष्मीशः गृहे उपविश्य पुरोहितेन सह सम्भाषमाणः आसीत् । तदा कश्चित् ब्राह्मणः तत्र आगतवान् । आगतं ब्राह्मणं दृष्ट्वा लक्ष्मीशः सविनयम् उत्थाय तं नमस्कृतवान् । तं पुरोहितस्य पार्श्वे एव उपावेश्य तस्य आगमनकारणं पृष्टवान् लक्ष्मीशः ।

तदा ब्राह्मणः उक्तवान् - "भोः ! भवतः ग्रामस्थस्य रत्नाकरश्रेष्ठिनः गृहं प्रति तस्य पुत्र्याः विवाहार्थम् आगतवान् आसम् । विवाहकार्यक्रमस्य अङ्गतया नाकबलिनाम्ना पुरोहिताय रजतस्थालिका दक्षिणारूपेण दीयते खलु ? एतस्य ग्रामस्य श्रेष्ठिनः अस्माकं पूर्वजेभ्यः नाकबलिस्थालिकाः यच्छन्ति स्म । अतः यद्यपि अहं न आहूतः तथापि वंशस्य सम्प्रदायानुगुणम् अहं नाकबलिनिमित्तम् अत्र आगतवान् । किन्तु रत्नाकरश्रेष्ठी यां दक्षिणां दत्तवान्, तस्याः दर्शनात् एव जुगुप्सा उत्पन्ना मम । इतः परं कदापि नाकबलिनिमित्तम् एतं ग्रामं प्रति न आगमिष्यामि इति चिन्तितवान् अहम् । एतावद्दूरम् आगतः अहं दानशूरं भवन्तं दृष्ट्वा



एव गच्छामि इति विचिन्त्य भवतः गृहम् आगतवान्'' इति।

ब्राह्मणस्य एतानि वचनानि श्रुत्वा लक्ष्मीशः सन्तोषेण गृहस्य अन्तः गत्वा फलताम्बूलदक्षिणादिकम् आनीय ब्राह्मणाय दत्तवान्। तं नमस्कृत्य सविनयम् उक्तवान् च - ''यथा श्रेष्ठिनः गृहे नाकबलिसम्प्रदायः नाम्ना केवलम् आचर्यते तथैव एतेषु दिनेषु अहम् अपि नाम्ना केवलं दानशूरः अस्मि। मम माता यदा दिवङ्गता तदा भूदानम् अपि कर्तुं न शक्तवान् अहम्। भूदानप्रतीकरूपेण पुरोहिताय कानिचन रूप्यकाणि दत्तवान्, आगामिषु दिनेषु अवश्यं भूदानं करिष्यामि इति वचनं दत्तवान् च।

एतादृशपरिस्थितौ भवान् यथा तुष्येत् तथा दक्षिणां दातुम् अहम् असमर्थः अस्मि। अतः कृपया क्षमां करोतु। मम मातुः निमित्तं पुरोहिताय मया यत् भूदानं करणीयम् अस्ति तत् यथा शीघ्रं कर्तुं शक्नुयाम् तथा माम् आशिषा अनुगृह्णातु कृपया'' इति।

लक्ष्मीशेन दत्तं फलताम्बूलादिकं स्वीकृत्य ब्राह्मणः लक्ष्मीशम् उक्तवान् - 'भवतः दक्षिणहस्तं दर्शयतु' इति। लक्ष्मीशः हस्तं प्रदर्शितवान्। तस्य हस्तरेखादिकं सम्यक् परिशील्य ब्राह्मणः उक्तवान् - ''लक्ष्मीशवर्य! भवतः हस्ते दानरेखा स्फुटा अस्ति। भवतः स्वकीया भूमिः अस्ति इति स्फुटं सूचयन्ति भवतः हस्तरेखाः। भवान् पुरोहिताय अवश्यं भूदानं करिष्यति'' इति।

एतत् श्रुत्वा अनुक्षणं पुरोहितः उक्तवान् - ''दानशूरः लक्ष्मीशः कदापि वचनं न उल्लङ्घयति। कदाचित् सः भूमिं सम्पाद्य मह्यं दद्यात् चेत् अपि न आश्चर्यं तत्र। किन्तु तां भूमिं यदि अहं स्वीकरोमि, तर्हि याचकवृत्तेः एव कलङ्कः तत्। तस्य कारणीभूतः अहं भवेयम्'' इति।

अनन्तरं पुरोहितः ब्राह्मणश्च गतवन्तौ।

कानिचन दिनानि अतीतानि। वसन्तपुरे काचित् नदी प्रवहति। तस्याः नद्याः बन्धः निर्मितः। नद्याः जलं लघुलघुकुल्याद्वारा यथा गच्छेत् तथा कृतम्। एतस्मात् कारणात् नद्यां जलं न्यूनं जातम्। तत्र तत्र मृत्तिकाप्रदेशाः दृष्टाः। ते प्रदेशाः पूर्वं केदाराः

आसन् । अत्यधिकजलप्रवाहकारणतः नद्यां निमग्नाः आसन् ते प्रदेशाः ।

कदाचित् वसन्तपुरग्रामस्य कायस्थः लक्ष्मीशस्य गृहम् आगत्य उक्तवान् - ''लक्ष्मीश ! वस्तुतः भवान् भाग्यशाली । नद्यां ये उन्नताः मृत्तिकाप्रदेशाः उत्पन्नाः सन्ति, तेषां मापनं कृत्वा कस्य कस्य कः कः प्रदेशः इति अस्माकं विभागद्वारा निर्णयः कृतः अस्ति । सर्वेक्षणस्य अधारेण दश एकर्मिता भूमिः इदानीं भवदीया भविष्यति'' इति ।

अनिरीक्षिततया प्राप्तायाः भूमेः विषयं श्रुत्वा लक्ष्मीशः अतीव सन्तुष्टः । कायस्थं सादरं सत्कृत्य पुरोहिताय आगन्तुं वार्तां प्रेषितवान् सः ।

पुरोहितस्य आगमनानन्तरं लक्ष्मीशः कायस्थम् उक्तवान् - ''मम माता यदा दिवङ्गता तदा अहम् एतस्मै भूदानं करोमि इति वाग्दानं कृतवान् आसम् । मम मरणात्पूर्वं दानं कर्तुं शक्नोमि वा न वा इति मम महती चिन्ता आसीत् । किन्तु इदानीं सा चिन्ता परिहृता अस्ति । इदानीं मया या भूमिः प्राप्ता, तां भूमिम् एतस्य पुरोहितस्य नाम्नि लिखतु'' इति ।

लक्ष्मीशः भूदानं करोति इति ज्ञात्वा पुरोहितः 'यदि दानस्वीकरणं निराकरोमि तर्हि लक्ष्मीशः खिन्नः भवति । अतः किं करणीयम् इदानीम्' इति चिन्तयन् अन्ते उक्तवान् - ''एतेन भूदानेन सह अन्यत् अपि दानं यदि लक्ष्मीशः दद्यात् तर्हि एव अहम् एतत् भूदानं स्वीकरोमि'' इति ।

पुरोहितस्य एतत् वचनं श्रुत्वा



लक्ष्मीशकायस्थौ आश्चर्यचकितौ । तथापि कायस्थः मन्दहासपूर्वकम् उक्तवान् - "तत् कीदृशं दानम् इति वदतु" इति।

तदा पुरोहितः कायस्थम् उक्तवान् - "एषः लक्ष्मीशः न केवलं दाने शूरः, अपि तु कृषिकार्ये अपि निपुणः इति सर्वे अपि जानन्ति। एतेन न केवलं भूदानम्, श्रमदानम् अपि करणीयम्। प्रकृतिविकोपेन महानद्यः उद्गच्छन्ति चेत् पर्वताः अपि नदीं निरोद्धुं न शक्नुवन्ति। अतः अद्य अस्माभिः प्राप्ता भूमिः पुनः कदाचित् जलप्रवाहेण नष्टा भवितुम् अपि अर्हति खलु!" इति।

पुरोहितस्य एतत् वचनं श्रुत्वा लक्ष्मीशः साश्चर्यं तं दृष्टवान्।

तदा कायस्थः पुरोहितस्य वचनस्य अर्थम् अवगत्य शिरः चालयन् - "भवतः वचनं सम्यक् एव अस्ति । किन्तु श्रमदानविषयः स्पष्टः न जातः । तत् किञ्चित् विस्तरेण वदतु" इति उक्तवान्।

तदा पुरोहितः सकृत् लक्ष्मीशं सविनयं नमस्कृत्य कायस्थम् उक्तवान् - "देहि इति वदन्तः ये गृहम् आगतवन्तः, तेभ्यः दानं कृतवन्तं लक्ष्मीशं दृष्ट्वा गङ्गादेवी सन्तुष्टा अस्ति । अतः एव सा लक्ष्मीशम् अनुगृहीतवती अस्ति। तस्याः भूमेः स्वीकारः सर्वथा अनुचिता। किन्तु लक्ष्मीशेन पूर्वं वचनं दत्तम् आसीत् इति कारणतः इदानीं मया अङ्गीकरणीयम् । अतः तेन सह कृषिकार्यश्रमदानम् अपि करोतु सः । कृषिक्षेत्रतः लक्ष्मीशः यत् सम्पादयति, तत्र पादभागः मह्यं दीयते चेत् अलम्" इति।

एतत् श्रुत्वा कायस्थः पुरोहितं साभिमानं पश्यन् लक्ष्मीशं पृष्टवान् - "एतद्विषये किं वदति लक्ष्मीश ?" इति।

तदा लक्ष्मीशः उक्तवान् - "पुरोहितः यत् वदति तत् न इति कथं वदेयम् अहम् ? सः यथा इच्छति, तथैव भवतु" इति।

अनन्तरकाले लक्ष्मीशः पुरोहिताय यावत् शक्यं तावत् अधिकं दानं करणीयम् इति चिन्तयन् परिश्रमेण कृषिकार्यं कुर्वन् 'दानशूरः' इति नाम रक्षन् बहुकालं सन्तोषेण जीवितवान्।



# र स वा र्ताः

## पिपीलिकापीडानिवारणम्



टेक्सास्प्रजाः पिपीलिकाभ्यः पीडिताः सन्ति। एतेषु दिनेषु पिपीलिकापीडा महती समस्या जाता अस्ति तासाम् । टेक्सास्-जनाः पिपीलिकानिवारणार्थं बहुधा प्रयत्नं कृतवन्तः । किन्तु तेन न किमपि प्रयोजनं जातम्। कीटनाशकम् औषधं पिपीलिकानाम् उपरि प्रयुक्तवन्तः तत्रत्याः। तेन अपि पिपीलिकाः न मृताः। केचन तु गृहम् एव त्यक्त्वा अन्यत्र गमनचिन्तनं कुर्वन्तः आसन् । अन्तिमंप्रयत्नरूपेण टेक्सास्-विश्वविद्यालयस्य विज्ञानिनः केचन जातिविशेषे जाताः मक्षिकाः ब्रेजिल्तः आनाय्य पिपीलिकानाम् उपरि त्यक्तवन्तः । एताः मक्षिकाः पिपीलिकानाम् उपरि उपविश्य अण्डानि उत्पादितवत्यः । अण्डेभ्यः बहिः आगताः नवजातमक्षिकाः पिपीलिकानां मस्तिष्कं खादितुम् आरब्धवत्यः । एतस्मात् पिपीलिकापीडा निवारिता अभवत्।



## वचनं पालितम्

सर्वे अपि पोषकाः वदन्ति यत् - दूरदर्शनकारणतः बालेषु अध्ययनवृत्तिः दिने दिने क्षीयमाणा अस्ति इति। अत्र सत्यांशोऽपि अस्ति किञ्चित् । बालेषु अध्ययनासक्तिं वर्धयितुम् अमेरिका-देशीया आर्. ऐ. एफ्. नामिका संस्था काञ्चित् योजनां निरूपितवती अस्ति। उत्तमानां पुस्तकानां पठने बालानाम् अध्ययनासक्तिं वर्धयितुं क्यालिफोर्नियानगरस्य 'षेर्लिडिराडो' नामिकायाः शालायाः शिक्षिका काचित् विचित्रपद्धतिम् अनुसृतवती । 'यदि विद्यार्थिनः पुस्तकमेकं समग्रं पठन्ति, तर्हि अहं सर्पमेकं गिलामि' इति सा तेभ्यः वचनं दत्तवती। शिक्षिकायाः वचनात् प्रभाविताः विद्यार्थिनः आर्. ऐ. एफ्. योजनया निर्मितं पुस्तकद्वयं पठितवन्तः । अनन्तरदिने एव शिक्षिका सर्वान् बालान् एकत्र समावेश्य, स्ववचनानुसारं चषकपरिमितेन नारङ्गफलरसेन सह सर्पद्वयं गीर्णवती।



# बधिराणां सम्भाषणम्

रामपुरस्य रामचन्द्रः सीतापुरस्य सीतापतेः दर्शनार्थं प्रातःकाले एव गृहतः प्रस्थितवान् । मध्येमार्गं लक्ष्मणपुरनामकं कञ्चन ग्रामं प्राप्तवान् रामचन्द्रः । तदा मध्याह्नसमयः आसीत् । बुभुक्षा तं बाधते स्म । अस्मिन् ग्रामे मध्याह्नभोजनं समाप्य अग्रे गच्छामि इति चिन्तयन् रामचन्द्रः कस्यचित् गृहस्य पुरतः स्थितवान् ।

रामचन्द्रः यस्य गृहस्य पुरतः स्थितवान् तद्गृहसदस्याः सर्वेऽपि बधिराः । गृहस्य वरण्डे उपविष्टं युवकं दृष्ट्वा रामचन्द्रः - ''सहोदर ! महति आतपे आगतः अहम् अतीव बुभुक्षितः अस्मि । अद्य मध्याह्नभोजनं भवतः गृहे कर्तुं शक्नोमि वा अहम् ? कृपया भवतः गृहसदस्यान् पृष्ट्वा वदतु'' इति वदन् वरण्डे उपविष्टवान् ।

युवकः अनुक्षणं गृहस्य अन्तः गत्वा विवाहयोग्याम् अनुजाम् उद्दिश्य - ''कः सः भवतीम् अन्विष्य आगतवान् अस्ति ? तम् एव परिणेष्यामि इति उक्तवती वा भवती ? सः आगत्य अस्माकं गृहस्य वरण्डे उपविष्टवान् अस्ति । यदि एतं विषयम् अस्मद्ग्रामीणाः जानन्ति तर्हि अस्माकम् अपमाननम् इति न जानाति वा भवती ?'' इति वदन् उच्चैः कोलाहलम् आरब्धवान् ।

अग्रजस्य वचनानि अन्यथा गृहीतवती अनुजा ताडनं प्राप्तः सर्पः इव कोपेन फूत्कुर्वती उत्थितवती । तस्याः पिता वाटिकायाम् उपविश्य धूमपानं कुर्वन् आसीत् । सा पितुः समीपं गत्वा - ''तात ! कीदृशः अन्यायः एषः ? अस्माकं भूमौ मम भागः नास्ति इति वदन् अस्ति अग्रजः । एतेषु दिनेषु भूस्वामिना उक्तम् अहम् अपि श्रुतवती अस्मि यत् पित्रार्जितभूमौ पुत्री अपि अवश्यं भागं प्राप्नोति इति । एतं नियमं सः बधिरः

अग्रजः न जानाति इति मन्ये । मां किम् अबला इति चिन्तितवान् अग्रजः ? अहम् अबला अविवेकिनी वा न'' इति उक्तवती।

पुत्र्याः वचनं श्रुत्वा कोपाविष्टः पिता कूपतः जलम् उद्धरन्तीं पत्नीं पृष्ठे ताडयन् - ''किं भोः ! 'पाकं न करोमि। भवत्याः पिता उपवासेन मरणं प्राप्नोतु' इति पुत्रीं वदति किल भवती ! कियत् धैर्यं भवत्याः ? इदानीं भवतीं प्रति कथनेन किं प्रयोजनम् ? विशेषपाकः मास्तु, सामान्यं पाकम् अपि न जानाति किल भवती । 'एषा कन्या भवते अनुरूपा न' इति वधूपरीक्षासमये मम पितामही बहुधा माम् बोधितवती आसीत्। किन्तु अहं तस्याः वचनं तृणीकुर्वन् भवतीं परिणीतवान् । एतत् सर्वं मम ललाटलिखितम्'' इति वदन् पानमत्तः कपिः इव कोलाहलम् आरब्धवान्।

एतत् श्रुत्वा तस्य पत्नी जलोद्धरणरज्जुं कूपे एव त्यक्त्वा श्वश्र्वाः समीपं गत्वा क्रोधेन उक्तवती - ''कीदृशी कठोरहृदया भवती ! भवत्याः पुत्रस्य वयः इदानीं पञ्चाशत् वर्षाणि । तादृशाय पुत्राय पुनः विवाहं कारयितुम् इच्छति किल भवती। भवत्याः एतेन व्यवहारेण ज्ञायते यत् भवत्याः बुद्धिः वक्रा जाता इति । किम् अहं किमपि न जानामि इति चिन्तितवती भवती ? मम स्वभावं न जानाति भवती। एतस्य ग्रामस्य ज्येष्ठान् सर्वान् आहूय तेषां पुरतः भवतीं तिन्त्रिणीदण्डेन ताडयिष्यामि'' इति।

स्नुषायाः एतानि वचनानि श्रुत्वा श्वश्रूः व्याघ्री इव गर्जन्ती उत्थाय -''हुँ, स्नुषात्वेन एतद्गृहम् आगतवत्याः भवत्याः जीवनं



सार्थकं जातम् अद्य। एतद्गृहतः मां बहिष्कर्तुं कियत् धैर्यं भवत्याः ? मां गृहात् निर्गच्छतु इति वक्तुं भवती का भोः ? एतत् मम पतिगृहम्। एतत् मम पुत्रस्य गृहम्। मम श्वशुरस्य पितामहेन निर्मिते अस्मिन् गृहे एव मरणपर्यन्तम् अपि जीविष्यामि अहम्'' इति वदन्ती अञ्चलं कटौ बद्ध्वा इतस्ततः अटितुम् आरब्धवती।

एवं गृहसदस्याः सर्वे अपि अर्थम् अजानन्तः कलहं कुर्वन्तः ग्रामाधिकारिणः समीपं गन्तव्यम् इति विचिन्त्य गृहात् बहिः आगतवन्तः।

वरण्डे उपविष्टः रामपुरस्य रामचन्द्रः गृहात् बहिः आगतान् गृहसदस्यान् दृष्ट्वा आनन्दातिरेकेण उत्तिष्ठन् उक्तवान् - ''अहो ! कीदृशः विनयव्यवहारः एतेषां गृहे ! भोजनार्थम् अतिथिम् आह्वातुं गृहसदस्याः भवन्तः सर्वे अपि बहिः आगताः खलु ! भवतां ग्रामस्य नाम किम् ? ग्रामस्य नाम यत्किमपि भवतु। अतिथिसत्कारार्थं प्रसिद्धस्य ग्रामस्य नाम एव न आवश्यकम्'' इति।

एतत् दृष्ट्वा कोपाविष्टः गृहस्य यजमानः - ''अस्माकं गृहस्य व्यवहारे भवान् किमर्थम् आलोडयति ? भवतः कः सम्बन्धः ? वयं केनापि सह विरोधं न कृतवन्तः खलु ! वयं सर्वम् अपि इच्छामः। अतः एव वयं परस्परं तर्जयामः, ताडयामः, अनन्तरं यथापूर्वं सन्तोषेण जीवामः च। आह्वानं विना अस्माकं गृहम् आगत्य अस्मान् बोधयितुं किं भवान् निर्लज्जः ? अन्यगृहस्य विषये चञ्चूप्रवेशः सर्वथा अनुचितः इति न जानाति वा भवान् ? धिक् मूर्ख !'' इति तर्जितवान्।

एतत् श्रुत्वा रामचन्द्रः भयेन कम्पमानः - ''हा हन्त ! एकभोजनार्थं दश रूप्यकाणि दातव्यानि वा ? यदि दश रूप्यकाणि मम समीपे स्युः तर्हि मम बुभुक्षा एव न अभविष्यत्, भवतां गृहम् न आगमिष्यं च'' इति वदन् हनूमान् इव ततः वेगेन उत्प्लुत्य धावितवान्।

वस्तुतः तु रामपुरस्य रामचन्द्रः अपि महान् बधिरः !





# महाभारतम्

नैमिषारण्ये पूर्वम् ऋषयः निवसन्ति स्म। तेषाम् ऋषीणां प्रमुखः शौनकः नाम महामुनिः । सः कदाचित् द्वादशवर्षावधिकं यागं कृतवान् । अनेके महामुनयः सम्भूय तं यागं कृतवन्तः।

यागसमये कदाचित् रोमहर्षणस्य पुत्रः उग्रश्रवाः नाम सूतः तत्र आगतवान्। सूतेन अज्ञाताः पौराणिककथाः न आसन्।

सूतं दृष्ट्वा सर्वे मुनयः महता सन्तोषेण तं परितः तिष्ठन्तः - "कुतः आगमनं भवतः ? भवतः दर्शनात् वयं सर्वे नितरां सन्तुष्टाः। भवतः मुखात् विविधाः पुराणकथाः श्रोतुम् इच्छामः वयम्" इति उक्तवन्तः।

तदा सूतः उक्तवान् - "ऋषिवर्याः ! परीक्षिन्महाराजस्य पुत्रः जनमेजयः सर्पयागनामकं महायागं कृतवान्। तत्समये वैशम्पायनः जनमेजयम् अपूर्वां भारतकथां श्रावितवान् । सा च कथा वैशम्पायनस्य गुरुणा वेदव्यासेन रचिता। अहं तां कथां श्रुत्वा युद्धभूमिं स्यमन्तपञ्चकं नाम स्थलं दृष्ट्वा अत्र आगतवान्" इति।

एतत् श्रुत्वा शौनकादयः सर्वे मुनयः महता उत्साहेन सूतम् उक्तवन्तः यत् व्यासेन रचिता महाभारतकथा अवश्यं श्रावणीया इति।

तदा सूतः तान् उक्तवान् -

"भारतकथारचना कथं जाता इति ज्ञातुं कुतूहलं स्यात् खलु भवताम् ? व्यासमहर्षेः अपरं नाम कृष्णद्वैपायनः इति जानन्ति एव खलु भवन्तः ? व्यासः वेदं चतुर्धा विभज्य तपश्चर्यार्थं हिमालयपर्वतं गतवान् । धृतराष्ट्रवंशीयाः यदा सर्वे दिवङ्गताः तदा तेन

१. परीक्षिन्महाराजेन शापः प्राप्तः।



समर्थः । भवान् तं मनसा स्मरतु । उपस्थितस्य तस्य द्वारा इतिहासग्रन्थं लेखयतु च'' इति उक्त्वा ततः अदृश्यः अभवत्।

व्यासः यदा मनसा विघ्नेश्वरस्य ध्यानं कृतवान् तदा विघ्नेश्वरः प्रत्यक्षः अभवत्। व्यासः तं स्वस्य अपेक्षां निवेदितवान्। सः विघ्नेश्वरः व्यासस्य कथनं यथावत् लिखितवान्।

एतस्याः इतिहासकथायाः प्रचारं देवलोके नारदः, पितृलोके देवलः, गन्धर्वलोकादिषु शुकश्च कृतवन्तः । जनमेजयस्य सर्पयागसन्दर्भे वैशम्पायनः ताम् एव कथां श्रावयन् भूलोके प्रसारितवान्'' इति।

चिन्तितं यत् भारतकथा लेखनीया इति । लोके सर्वे एतां कथां पठेयुः इति तस्य इच्छा। एतदर्थं किं करणीयम् इति सः यावत् चिन्तयन् आसीत् तावता तं द्रष्टुं ब्रह्मा आगतवान्।

व्यासः ब्रह्मदेवं भक्त्या नमस्कृत्य उचिते आसने उपवेश्य अर्घ्यादिभिः सत्कृतवान् । अनन्तरं तं स्वस्य इच्छां निवेद्य - ''देव ! मया सङ्कल्पितम् अस्ति यत् वेदानां सारं संयोज्य भारतनाम्ना इतिहासग्रन्थः कश्चन लेखनीयः इति। प्रजाः तं पठित्वा सन्तोषं प्राप्नुयुः इति मम अपेक्षा । किन्तु समस्या नाम लेखितुं समर्थः कोऽपि न दृश्यते इति'' इति उक्तवान्।

तदा ब्रह्मा - ''वत्स ! विघ्नेश्वरः एतदर्थं

एतत् श्रुत्वा शौनकादिमुनयः सूतमहर्षिं पृष्टवन्तः - ''कौरवपाण्डवाः यत्र युद्धं कृतवन्तः तस्य स्थलस्य नाम 'स्यमन्तपञ्चकम्' इति किमर्थं ख्यातम् अभवत् ?'' इति।

तदा सूतमहर्षिः तान् उक्तवान् - ''त्रेता-द्वापरयोः सन्धिकाले राजानः अपरिमितेन अहङ्कारेण युक्ताः सन्तः अधर्ममार्गेण व्यवहरन्तः आसन्। एतत् दृष्ट्वा क्रुद्धः परशुरामः एकविंशतिवारं लोकसञ्चारं कृत्वा तान् संहृतवान् । तेषां रक्तेन पञ्च तटाकान् निर्माय तटाकस्थेन जलेन पितृभ्यः तर्पणम् अर्पितवान् । सन्तुष्टाः पितृदेवताः उक्तवत्यः यत् एते पञ्च तटाकाः अपि पुण्यक्षेत्रत्वेन ख्याताः भवन्तु इति। तस्मिन्

एव क्षेत्रे अतिघोरं भारतयुद्धं प्रवृत्तम्। अतः स्यमन्तपञ्चकस्य कुरुक्षेत्रम् इत्यपि नाम जातम्'' इति।

''परीक्षिन्महाराजस्य पुत्रेण जनमेजयेन सर्पयागः किमर्थम् अनुष्ठितः ?'' इति पुनः कुतूहलेन सूतमहर्षिं पृष्टवन्तः शौनकादयः मुनयः।

तदा सूतः एतत्सम्बन्धिनीं कथाम् उक्तवान् - ''परीक्षिद्राजस्य पुत्रः जनमेजयः कुरुक्षेत्रे अनुजानाम् उग्रसेन-श्रुतसेन-भीमसेनानां साहाय्येन सत्रयागं कुर्वन् आसीत् । तत्काले सरमानामिकायाः देवताशुनक्याः पुत्रः सारमेयः यज्ञभूमिप्रदेशे सञ्चरन् आसीत् । तदा जनमेजयस्य सहोदराः तं ताडयित्वा ततः प्रेषितवन्तः। सारमेयः मातुः समीपं गत्वा प्रवृत्तं सर्वम् अवदत्। तदा सरमा - ''ये सज्जनान् दरिद्रान् च पीडयन्ति ते निश्चयेन हानिम् अनुभविष्यन्ति'' इति उक्तवती।

सरमायाः वचनानि जनमेजयेन अपि ज्ञातानि। 'एतानि शापरूपेण मां पीडयेयुः' इति चिन्तयित्वा जनमेजयः शान्त्यर्थं यागं कारयितुम् इच्छन् पुरोहितस्य अन्वेषणम् आरब्धवान्।

कदाचित् सः अरण्ये मृगयार्थं गतवान् आसीत्। तत्समये तेन श्रुतश्रवसः आश्रमः दृष्टः।

श्रुतश्रवसः पुत्रः सोमश्रवाः इति कश्चित् अस्ति इति ज्ञात्वा जनमेजयः श्रुतश्रवसं पृष्टवान् - ''भवदीयं पुत्रं मम पुरोहितत्वेन



प्रेषयति वा भवान् ?'' इति।

''मम पुत्रस्य कश्चन नियमः अस्ति यत् सः, याचमानाय ब्राह्मणाय यत् प्राप्यते तत् ददाति। एतस्य नियमस्य भङ्गः यथा न भवेत् तथा व्यवस्था यदि क्रियते तर्हि मम पुत्रः भवतः पुरोहितः भविष्यति'' इति उक्तवान् श्रुतश्रवाः।

जनमेजयः एतत् अङ्गीकृत्य सोमश्रवसम् आत्मना सह हस्तिनापुरं नीतवान्। तत्र तस्य साहाय्येन विविधान् यागान् कृतवान् च।

एवं स्थिते कदाचित् उदङ्कः नाम महर्षिः जनमेजयसमीपम् आगत्य - ''राजन् ! यत् कार्यम् अवश्यं करणीयं तदेव भवता क्रियमाणं नास्ति खलु ?'' इति।

''श्रीमन् ! क्षत्रियोचितानि सर्वाणि



कार्याणि अहं सम्यक् एव कुर्वन् अस्मि खलु? मया अकृतं कार्यं किं तत्?" इति उदङ्कं पृष्टवान् जनमेजयः।

"भवतः पितरं परीक्षिन्महाराजं दंशनेन मारितवान् खलु तक्षकः नाम सर्पः? दुष्टः सः भवत्पितुः रक्षणार्थम् आगताय काश्यपाय प्रभूतं धनं दत्त्वा तं प्रतिप्रेषितवान्। अतः दुर्मार्गानुयायी सः भवता भस्मसात्करणीयः। एतदर्थं सर्पयागः एव उचितः मार्गः" इति जनमेजयम् उक्तवान् उदङ्कः।

वस्तुतः तु उदङ्कः अपि प्रतीकारं साधयितुम् इच्छति स्म। तक्षकविषये तस्य महान् द्वेषः आसीत्।

पूर्वम् उदङ्कः वेद-नामकात् मुनिवरात् विद्यां गृहीत्वा गृहस्थाश्रमस्वीकारसन्दर्भे गुरुं पृष्टवान् आसीत् - "गुरुदक्षिणारूपेण अहं किं दद्याम्?" इति।

"मम पत्नी यत् इच्छति तत् मह्यं ददातु भवान्। अतः प्रथमं मम पत्नीं पृच्छतु" इति उक्तवान् गुरुः।

उदङ्कः गुरुपत्नीसमीपं गत्वा तस्याः अपेक्षां पृष्टवान्।

"इतः चतुर्थे दिने अहं पुण्यकव्रतम् आचरिष्यामि। व्रतसमये कुण्डलं धर्तव्यम् इति मम इच्छा। मया अपेक्ष्यमाणं कुण्डलं पौष्यनामकस्य राज्ञः पत्न्याः सकाशे अस्ति। यदि शक्यं तर्हि तत् आनीय ददातु" इति उक्तवती गुरुपत्नी।

उदङ्कः पौष्यराजस्य पत्न्याः समीपं गत्वा विषयं निवेदितवान्। सा स्वस्य कुण्डलम् उदङ्काय सन्तोषेण दत्तवती। तेनैव सह जागरूकतावचनं सूचितवती यत् एतत् कुण्डलम् अपहर्तुं तक्षकः अवकाशं प्रतीक्षमाणः अस्ति इति।

उदङ्कः कुण्डलं स्वीकृत्य अरण्यमार्गेण गच्छन् आसीत्। मध्येमार्गं सः एकं सरोवरं दृष्ट्वा तत्र आचमनं कर्तुम् इच्छन् कुण्डलम् एकत्र संस्थाप्य सरोवरसमीपं गतवान्। एतावत्पर्यन्तम् उदङ्कं रहसि अनुसरन् आगतः तक्षकः झटिति अग्रे गत्वा कुण्डलम् अपहृत्य पलायितवान्।

मानवरूपं तक्षकम् अनुसृत्य धावितः उदङ्कः तक्षकं गृहीतवान्। तक्षकः झटिति सर्परूपं प्राप्य बिलं प्रविष्टवान्।

उदङ्कः तक्षकेण प्रविष्टं बिलं दण्डसाहाय्येन खनन् मार्गं विस्तारयन् पाताललोकं प्रविष्टवान्।

तत्र सः नागान् दृष्ट्वा विविधैः स्तोत्रैः तेषां स्तुतिं कृतवान्। किन्तु तेन प्रयोजनं किमपि न सिद्धम्। अन्ते कश्चन अश्वारोही पुरुषः तस्य पुरतः आगत्य स्थितवान्। अग्निः अश्वरूपेण, इन्द्रः अश्वारोहिरूपेण च आगतौ आस्ताम्। अश्वारोही उदङ्कं पृष्टवान् - "किम् इच्छति भवान् ?" इति। तदा उदङ्कः उक्तवान् - "एतं नागलोकं मदधीनं करोतु" इति। अपरक्षणे अश्वस्य मुखात् अग्निज्वालाः निर्गताः। 'नागलोकः समग्रः भस्मीभवति चेत् सर्वनाशः भवेत्' इति चिन्तयन् भीतः तक्षकः कुण्डलम् आनीय उदङ्काय दत्तवान्। सः तत् नीत्वा योग्ये काले गुरुपत्न्यै दत्तवान्।

'स्वस्य पितुः मरणस्य कारणं तक्षकः एव' इति उदङ्कमुखात् ज्ञातवान् जनमेजयः मन्त्रिणः आहूय पृष्टवान् - "घटना कथं प्रवृत्ता ?" इति।

तदा ते परीक्षिद्राजस्य मरणस्य कारणम् उक्तवन्तः -

भारतयुद्धे मरणं प्राप्तवतः अभिमन्युतः उत्तरायां जातः परीक्षिद्राजः कृपाचार्यतः विद्याः प्राप्य पाण्डवैः उपभुक्तं राज्यं पालयन् आसीत्। मृगयायां विशेषरुचिः तस्य। कदाचित् सः मृगयासन्दर्भे प्रहारं प्राप्य पलायनं कृतवतः मृगस्य अनुसरणं कुर्वन् शमीकनामकस्य महामुनेः तपोभूमिम् आगतवान्। तं पृष्टवान् च - "बाणेन विद्धः मृगः अत्र आगतः। सः अग्रे कुत्र गतः ?"



इति।

मौनव्रतम् आश्रितवान् शमीकः प्रत्युत्तरं किमपि न दत्तवान्। एतेन परीक्षिद्राजस्य कोपः आगतः। सः मृतम् एकं सर्पं बाणेन उन्नीय शमीकस्य कण्ठे निक्षिप्य ततः निर्गतवान्।

परीक्षिद्राजेन यद्यत् कृतं तत्सर्वं शमीकस्य पुत्रः शृङ्गी मित्रमुखात् ज्ञातवान्। उग्रकोपी सः क्रोधेन - "इतः सप्तमे दिने उद्धतः सः परीक्षिद्राजः तक्षकस्य विषेण मरणं प्राप्नोतु" इति शापं दत्तवान्।

एतादृशेन घोरेण शापवचनेन परीक्षिद्राजं शप्तवतः पुत्रस्य शृङ्गिणः व्यवहारात् नितरां खिन्नः शमीकः गौरीमुखनामकं स्वशिष्यम् आहूय - "भवान् परीक्षित्समीपं गत्वा शापवार्तां निवेद्य, तक्षकात् अपायः यथा न प्राप्येत तथा जागरूकता आश्रयणीया इति तं मद्वचनैः वदतु" इति उक्तवान्।

गौरीमुखः परीक्षिद्राजस्य समीपं गत्वा गुरोः वचनं निवेदितवान्।

परीक्षिद्राजः आत्मनः कृत्यस्य निमित्तं महान्तं पश्चात्तापम् अनुभवन् शृङ्गिणः शापात् भीतः सन् 'शापबाधातः विमोचनं प्राप्तुं कमपि उपायं सूचयन्तु कृपया' इति मन्त्रिणः प्रार्थितवान्।

मन्त्रिणः स्तम्भस्य उपरि भवनं निर्मितवन्तः। तस्य भवनस्य अन्तः विषनिवारकाणि विविधानि औषधमूलानि सङ्गृहीतवन्तः। मशकः अपि भवनं यथा न



प्रविशेत् तथा भवने विशेषतः पिधानादिव्यवस्थां कृतवन्तः। विषवैद्याः मान्त्रिकाः चापि आनायिताः। भवनस्य रक्षणार्थं विशेषव्यवस्था कृता। मान्त्रिणः तु राज्ञा सहैव तस्मिन् भवने वासं कृतवन्तः।

षड् दिनानि निर्विघ्नम् अतीतानि। सप्तमं दिनम् उपस्थितम्। काश्यपः नाम ब्राह्मणः परीक्षिद्राजस्य शापवार्तां श्रुत्वा 'तक्षकस्य दशंनात् यदि प्राणापायः स्यात् तर्हि महाराजः मया उज्जीवनीयः' इति सङ्कल्प्य राजधानीं प्रति प्रस्थितवान्। 'राजा केन रूपेण दंष्टव्यः' इति चिन्तयन् स्थितः तक्षकः मार्गे काश्यपं दृष्ट्वा ब्राह्मणवेषेण तस्य समीपं गत्वा गमनकारणं पृष्टवान्।

तदा काश्यपः तक्षकम् उक्तवान् -

''सर्पविषनिवारणोपायम् अहं जानामि । सर्पदशंनेन मृतम् अपि जनम् अहं मन्त्रशक्त्या उज्जीवयितुं शक्नोमि । यदा तक्षकः महाराजं दशेत्, तदा अहं यदि तम् उज्जीवयेयं तर्हि प्रभूतं धनं कीर्तिं च प्राप्नुयाम्'' इति।

तदा तक्षकः आत्मनः परिचयम् उक्त्वा - ''भोः, मम विषेण ये मरणं प्राप्नुवन्ति ते क्षणमात्रेण भस्मीभवन्ति। अतः महाराजम् उज्जीवयितुं न अर्हति भवान्। अलं वृथाश्रमेण । प्रतिगच्छतु तावत्'' इति बोधितवान्।

काश्यपः एतत् न अङ्गीकृतवान् । तदा तक्षकः समीपस्थम् एकं वटवृक्षं दंशनेन भस्मीकृतवान् । काश्यपः क्षणाभ्यन्तरे एव भस्मीभूतं तं वृक्षम् उज्जीवितवान्।

''मम विषं निवारयितुं शक्नुयात् भवान्। किन्तु मुनिकुमारस्य शापः तु निवारयितुं न शक्यः खलु ? विधिनिर्णयस्य परिवर्तनार्थं प्रयत्नः मूर्खतायै स्यात् । भवान् सम्पत्तिप्राप्तीच्छया खलु महाराजम् उज्जीवयितुम् इष्टवान् ? सम्पत्तिम् अहं दास्यामि । तां प्राप्य प्रतिगच्छतु तावत्'' इति उक्त्वा काश्यपे लोभं जनयित्वा तस्मै प्रभूतं धनं दत्त्वा तं प्रतिप्रेषितवान्।

अनन्तरं तक्षकः कांश्चन नागरिकान् धनेन वशीकृत्य मुनिकुमारवेषेण युक्तान् तान् परीक्षित्समीपं प्रेषितवान्।

ते फलपुष्पादिभिः सह परीक्षित्समीपं गतवन्तः। तैः दत्तेषु फलेषु एकं विभक्तवान् राजा। तस्य फलस्य अन्तः कश्चन लघुः कीटः आसीत्।

परीक्षिद्राजः परितः स्थितान् उद्दिश्य - ''सूर्यास्तः सन्निहितः । शापसमाप्तिकालः समाप्तः इव। इतःपरं तक्षकः मां कथं वा दशेत् ? एषः कीटः मां दशेत्, न तु अन्यः कोऽपि'' इति हासपूर्वकम् उक्तवान्। तावता सः कीटः तक्षकरूपं प्राप्य महाराजम् अदशत् । सर्वे भयात् ततः पलायनं कृतवन्तः । तक्षकदंशनात् परीक्षिद्राजः मरणं प्राप्तवान्। तत् भवनं राजा चापि भस्मीभूतौ ।





# घोरकस्य औदार्यम्

चन्द्रमती अतीव सौन्दर्यवती । सा त्रिरूपदेशस्य युवराज्ञी । चन्द्रमती कदाचित् विविधानि विचित्रदृश्यानि, विविधान् विशेषान् च द्रष्टुम् इच्छन्ती समीपस्थं विरूपदेशं गतवती । वीरसेनः विरूपदेशस्य युवराजः । युवराजः वीरसेनः स्वयं गत्वा चन्द्रमतीं सादरं स्वागतीकृतवान् । अनन्तरं च तां सर्वत्र नीत्वा रमणीयान् आश्चर्यजनकान् प्रदेशान्, विविधानि विचित्राणि च दर्शितवान् । बहुदिनपर्यन्तं स्थितस्य सहवासस्य कारणतः वीरसेनः चन्द्रमती च परस्परम् अनुरक्तौ जातौ ।

अनन्तरं चन्द्रमती स्वदेशं गतवती । कानिचन दिनानि अतीतानि । कदाचित् चन्द्रमत्याः पिता वीरसेनाय आह्वानं प्रेषितवान् यत् - भवता स्वयंवरार्थम् आगन्तव्यम् इति । एतेन सन्तुष्टः वीरसेनः स्वयंवरगमनसन्नाहम् आरब्धवान् । अत्रान्तरे काचित् घटना प्रवृत्ता ।

कदाचित् घोरकः नाम राक्षसः राजधानीम् आगत्य युवराज्ञीं चन्द्रमतीम् अपहृत्य गतवान् । एतेन चिन्ताकुलः त्रिरूपस्य राजा शय्याम् आश्रितवान् । घोरकनामकः राक्षसः महाबलवान् मन्त्रवादी च । सः कालारण्ये निवसति स्म । तत् कालारण्यं प्रति गतः कोऽपि सजीवं बहिः न आगच्छति स्म ।

घोरकः महाबलवान् राक्षसः इति कारणतः तस्य सम्मुखीकरणं कष्टकरम् एव । तथापि वीरसेनः घोरकस्य सम्मुखीकरणार्थं सिद्धः जातः । यतः वीरसेनः चन्द्रमतीविषये



नितराम् अनुरागवान् आसीत् । 'चन्द्रमतीं विना जीवितुम् एव न शक्नोमि' इति वीरसेनस्य चिन्तनम् । घोरकस्य सम्मुखीकरणं मास्तु इति मातापितृभ्यां पुनः पुनः निवार्यमाणः अपि वीरसेनः कालारण्यं गतवान् । तत्र केचन राजकुमाराः दृष्टाः वीरसेनेन । ते राजकुमाराः अपि 'घोरकराक्षसतः चन्द्रमती विमोचनीया' इति उद्देशेन कालारण्यं प्रति आगताः आसन् । घोरकः तान् राजकुमारान् बन्धने स्थापयित्वा मण्डूक-बक-गृहगोधिकादि-रूपेण परिवर्त्य तान् उक्तवान् आसीत् - ''इदानीम् एव भवन्तः इतः निर्गताः चेत् स्वकीयं रूपं प्राप्स्यन्ति । नो चेत् भवताम् मण्डूकबकादिरूपानुगुणम् आयुः क्रमशः क्षीणं भविष्यति । भीकरेण प्राणभयेन महत् कष्टम् अनुभविष्यन्ति भवन्तः'' इति ।

तदा ते राजकुमाराः प्राणभयात् कालारण्यतः प्रस्थिताः । मध्येमार्गं केचन सर्पाणाम् आहाराः जाताः । अन्ये केचन वन्यमृगाणां पादाघातेन मृताः । अपरे केचन व्याधानां जाले पतिताः । अवशिष्टाः केचन अरण्यम् अतिक्रम्य स्वकीयं रूपं प्राप्तवन्तः । स्वकीयं रूपं प्राप्तवतः राजकुमारान् घोरकः आज्ञापितवान् आसीत् यत् वर्षं यावत् अरण्यसमीपे एव स्थित्वा अन्ये राजकुमाराः आगत्य यथा अरण्यप्रवेशं न कुर्युः तथा भवद्भिः जागरूकैः भवितव्यम् इति ।

ते राजकुमाराः तत्र आगतं वीरसेनम् उक्तवन्तः - ''बलवन्तं महाराक्षसं घोरकं सम्मुखीकर्तुम् अस्मिन् जगति कोऽपि न शक्नोति । अतः भवान् युवराज्ञीं चन्द्रमतीं विस्मरति चेत् एव वरम्'' इति ।

तदा वीरसेनः - ''भवतां मम च कश्चन महान् भेदः अस्ति । भवतां चिन्तनम् अस्ति - 'चन्द्रमत्या सह परिणयः नास्ति चेदपि चिन्ता नास्ति । अस्माकं प्राणहानिः न भवेत्' इति । परन्तु मम चिन्तनम् अस्ति - 'चन्द्रमतीं विना जीवनम् एव अर्थहीनम्' इति । अतः अहं चन्द्रमतीं प्राप्तुं घोरकसमीपं गच्छन् अस्मि'' इति उक्त्वा कालारण्यं प्रविष्टवान् ।

वीरसेनः कालारण्ये किञ्चिद्दूरं गतवान् । तावता केनचित् पृष्ठभागतः वीरसेनस्य नेत्रे पिहिते । अकस्मात्

उपस्थितेन आघातेन वीरसेनः महत् कष्टम् अनुभूतवान् । क्षणकालाभ्यन्तरे एव तस्य पुरतः कश्चित् महाकायः दृष्टः । तस्य नेत्रद्वयम् अपि ज्वलत् अग्निगोलम् इव दृश्यते स्म । केशाः कण्टकगुल्मसदृशाः आसन् । सः महाकायः वीरसेनम् उद्दिश्य - "मम नाम घोरकः । अरण्यस्य द्वारप्रदेशे स्थिताः राजकुमाराः मम विषयं भवन्तम् उक्तवन्तः स्युः । तथापि अस्य अरण्यस्य अन्तः आगतवतः भवतः साहसम् अपूर्वम् एव । मां मारयितुं धैर्यम् अस्ति वा भवतः ?" इति पृच्छन् हसितवान् ।

तदा वीरसेनः धैर्येण उक्तवान् - "अहं भवन्तं मारयितुं न, अपि तु मम प्रियतमां चन्द्रमतीं प्राप्तुम् आगतवान्" इति ।

एतत् श्रुत्वा घोरकः - "भवतः प्रियतमाविषयकः अनुरागः एव भवन्तं नाशयति । प्राणाः प्रियाः चेत् यावच्छीघ्रं निर्गच्छतु इतः" इति उक्तवान् ।

तदा वीरसेनः - "मह्यं चन्द्रमती आवश्यकी । यदि सा न लभ्यते, तर्हि अहं जीवनम् एव न इच्छामि" इति उक्तवान् ।

वीरसेनस्य वचनं श्रुत्वा घोरकः साभिमानं तं पश्यन् उक्तवान् - "यदि साहसेन भवान् चन्द्रमतीं प्राप्तुम् इच्छति तर्हि कञ्चित् उपायं वदामि, शृणोतु । क्वथता तैलेन भवता स्नानं करणीयम् । एतदर्थं भवान् सिद्धः चेत् वरम् । नो चेत् भवन्तं मण्डूकरूपेण परिवर्तयामि । भवान् उत्प्लवनं कुर्वन् अरण्यम् अतिक्रम्य गच्छति चेत् पूर्वतनं रूपं प्राप्नोति" इति ।

"अहं तप्यमानेन तैलेन स्नानं कर्तुं





सिद्धः'' इति उक्तवान् वीरसेनः।

अनन्तरं घोरकः वीरसेनं हस्तेन गृहीत्वा प्रस्थितवान् । एकत्र काष्ठचुल्लिः ज्वलन्ती आसीत्। चुल्लेः उपरि एकं बृहत् तैलभाण्डम् आसीत् । तैलभाण्डे तैलं क्वथत् अस्ति । घोरकः वीरसेनं तत्र नीतवान् । वीरसेनः क्वथत् तैलं दृष्टवान्।

तदा घोरकः वीरसेनम् उद्दिश्य - ''वीरसेन ! पुनरपि चिन्तयतु एतद्विषये । एतेन स्नानं भवता शक्यं वा ? अथवा मण्डूकरूपं प्राप्य प्रतिगच्छति वा भवान् ?'' इति पृष्टवान्।

एतत् श्रुत्वा वीरसेनः - ''मया पूर्वम् एव उक्तं खलु ! पुनः परिवर्तनं नास्ति एव'' इति उक्तवान्।

घोरकः अनुक्षणं वीरसेनं तैलभाण्डे पातितवान् । तस्य शरीरं दग्धम् । शरीरे बुद्बुदाः उत्पन्नाः । वीरसेनः महतीं वेदनां सोढुम् अशक्नुवन् उच्चैः क्रन्दनं कृतवान्।

एतत् दृष्ट्वा अपि घोरकः किञ्चिदपि न विचलितः। वीरसेनस्य शरीरं निर्जीवं सत् उपरि आगतम्। तदा घोरकः कमपि मन्त्रम् उच्चारितवान्। अपरक्षणे एव ज्वलन्ती चुल्लिः अदृश्या जाता। वीरसेनः यथापूर्वं सजीवं तत्र दृष्टः।

एतत् दृष्ट्वा घोरकः तृप्त्या शिरः चालयन् उक्तवान् - ''भवतः प्राणाः न गताः। किन्तु प्राणापायकरम् एतत् उष्णतैलस्नानं त्रीणि दिनानि करणीयं भवता । अनन्तरम् एव चन्द्रमत्याः प्राप्त्युपायं वदिष्यामि अहम् । एतदर्थं सिद्धः वा भवान् ? नो चेत् मण्डूकरूपं प्राप्य प्रतिगन्तुम् अर्हति'' इति।

तदा वीरसेनः दृढस्वरेण उक्तवान् - ''मह्यं चन्द्रमती आवश्यकी'' इति।

एतत् श्रुत्वा घोरकः वीरसेनम् अभिनन्दन् उक्तवान् - ''राजकुमार ! एतावत्पर्यन्तम् अपि अन्येन केनापि कर्तुम् अशक्तं साहसं भवान् कृतवान् अस्ति । चन्द्रमतीविषयकः भवतः अनुरागः गाढः अस्ति इति तु सिद्धम्। अतः अहम् इदानीं चन्द्रमत्याः प्राप्त्युपायं भवन्तं वदामि । श्रद्धया शृणोतु तावत् -

कालारण्ये एव एकस्मिन् प्रदेशे घोरिकानामिका राक्षसी अस्ति। पराक्रमेण शक्तियुक्तिप्रदर्शनेन च सा मम समाना एव

अस्ति । तस्याः समीपे विशिष्टं कुङ्कुमम् अस्ति । तत् आनीय मह्यं ददाति चेत् अहं चन्द्रमत्याः विमोचनं करिष्यामि'' इति ।

एतत् श्रुत्वा वीरसेनः पृष्टवान् - ''तस्य कुङ्कुमस्य वैशिष्ट्यं किम् ? भवता अपि साधयितुम् अशक्यं यत् अस्ति, तत् मया शक्यते वा ?'' इति ।

तदा घोरकः - ''तर्हि शृणोतु । मम समीपे एकं विशिष्टं कुङ्कुमपात्रम् अस्ति । तस्मिन् पात्रे कुङ्कुमं पूरयित्वा अहं स्वसमीपे स्थापयामि चेत् प्रपञ्चे या कापि शक्तिः मां जेतुं न शक्नोति । तावदेव न, घोरिकायाः अपेक्षया अपि अहं श्रेष्ठः भविष्यामि । किन्तु घोरिकातः तत् कुङ्कुमसम्पादनं न सुलभम् । तस्याः वासस्थानप्रवेशः तु सामान्यजनैः सर्वथा अशक्यः । यः तप्यमानेन तैलेन महतीं वेदनाम् अनुभवन् अपि स्नानं कर्तुं समर्थः, सः एव घोरिकायाः निवासं प्रवेष्टुं शक्नोति । यद्यपि अहं शक्तिमान्, तथापि अहं उष्णतैलस्नानं कर्तुं न शक्तवान् । तादृशः साहसी वीरः युवकः अवश्यं लभ्यते इति विचिन्त्य एव अहं चन्द्रमतीम् अपहृतवान् । भवान् राक्षस्याः घोरिकायाः वासस्थानं प्रविश्य कुङ्कुमम् आनीय दातुं शक्नोति वा ?'' इति पृष्टवान् ।

''प्रयत्नं करोमि'' इति राक्षसम् उक्तवान् वीरसेनः ।

घोरकः पुनः उक्तवान् - ''घोरिका रात्रिसमये शयनगुहायां मानवाकारेण निद्रां कुर्वती भवति । तस्मिन् समये अहं भवन्तं तस्याः वासस्थानं नेष्यामि । मया काचित् मूलिका भवते दीयते । सा मूलिका तस्याः





ललाटे स्थापनीया भवता । तदा सा मृता भविष्यति । तस्याः शयनमञ्चस्थस्य उपधानस्य अधः कुङ्कुमम् अस्ति'' इति।

अनन्तरं घोरकः वीरसेनाय मूलिकां दत्तवान् । वीरसेनः मूलिकां स्वीकृत्य घोरकस्य सूचनानुगुणं नेत्रे निमीलितवान्। क्षणकालानन्तरं तेन कस्यचित् विचित्रमञ्चस्य समीपे स्थितम् आसीत् । तस्मिन् मञ्चे सामान्यसुन्दरी काचित् निद्रामग्ना आसीत्। एषा एव राक्षसी घोरिका इति ऊहितवान् वीरसेनः।

वीरसेनः मूलिकां घोरिकायाः ललाटे स्थापयितुम् उद्युक्तः । किन्तु वृथा घोरिकां मारयितुं सः न इष्टवान्। क्षणकालं विचिन्त्य सः पादस्पर्शपूर्वकं ताम् जागरितवान्।

घोरिका जागरणं प्राप्य हूँकुर्वती उत्थाय पृष्टवती - ''कः भवान्? वायुः अपि मम गुहां प्रवेष्टुं न शक्नोति । एवं स्थिते भवान् कथं प्रविष्टवान्?'' इति।

तदा वीरसेनः प्रवृत्तं सर्वं तां विवृण्वन् - ''भवतीं मारयितुम् अहम् अशक्ष्यम्। किन्तु तथा न कृतवान्। एकया दृष्ट्या अहं भवत्याः प्राणदाता । एतस्य प्रत्युपकाररूपेण भवती मह्यं कुङ्कुमं ददातु'' इति उक्तवान्।

एतत् श्रुत्वा घोरिका वीरसेनस्य औदार्यं प्रशंसन्ती उक्तवती - ''राजकुमार ! अहं कुङ्कुमं भवते ददामि चेत् भवान् तत् घोरकाय दास्यति । तदा घोरकः मां तस्य दासीं करिष्यति। तेन मम कष्टं भविष्यति। अतः भवान् मम एकं साहाय्यं करोतु। अहम् अपि भवते एकां मूलिकां दास्यामि । यदा घोरकः रात्रौ मानवाकारेण निद्रां कुर्वन् भविष्यति, तदा एतस्याः मूलिकायाः साहाय्येन घोरकं मारयतु । कुङ्कुमपात्रं च आनीय मह्यं ददातु। एतेन भवान् चन्द्रमतीं प्राप्स्यति । अहं जगति एव अद्वितीया शक्तिमती भविष्यामि । भवान् यदा यदा इच्छति, तदा तदा भवतः साहाय्यं करिष्यामि च'' इति।

तदा वीरसेनः उक्तवान् - ''भवत्याः चिन्तनं न उचितम् । जगति स्त्रीपुरुषयोः सामरस्यम् अत्यावश्यकम् । यदि भवती घोरकं परिणेष्यति, तर्हि भवन्तौ उभौ अपि महान्तौ शक्तिमन्तौ भवतः । अतः भवती घोरकविषये अनुरागं प्रकटयन्ती एतत्

कुङ्कुमं ददातु । तदा घोरकः भवत्याः प्रियतमः भविष्यति'' इति ।

वीरसेनस्य एतानि वचनानि घोरिकायै अरोचन्त । सा उपधानस्य अधः विद्यमानं कुङ्कुमं वीरसेनाय यच्छन्ती उक्तवती - ''अहं घोरकं परिणेतुम् इच्छामि । एतत् कुङ्कुमं घोरकाय मम उपायनम्'' इति ।

अनन्तरं वीरसेनः घोरकस्य समीपं गत्वा प्रवृत्तं सर्वं निवेद्य - ''भवान् यावतीः शक्तीः वा सम्पादयतु, परन्तु ताः शक्तयः सुखं दातुं न शक्नुवन्ति । अतः सुखेन जीवितुं भवान् घोरिकां परिणेष्यति चेत् वरम्'' इति उक्तवान् ।

उपायनरूपेण अनुरागद्योतकं कुङ्कुमं प्रेषितवत्याः घोरिकायाः विषये घोरकः नितराम् अनुरक्तः । अतीव सन्तुष्टः सः चन्द्रमतीं वीरसेनाय अर्पितवान् ।

अरण्यस्य द्वारप्रदेशे स्थिताः राजकुमाराः वीरसेनसकाशात् प्रवृत्तं सर्वं ज्ञात्वा - ''घोरकः घोरिका च परमदुष्टौ । अवकाशे प्राप्ते सति युक्त्या तौ मारणीयौ आस्तां भवता । परन्तु भवान् स्वार्थम् एव चिन्तयन् स्वकीयं कार्यं सम्पादितवान्'' इति वीरसेनं निन्दितवन्तः ।

एतत् श्रुत्वा वीरसेनः मन्दहासपूर्वकं - ''प्रीतिः द्वेषं न जानाति । चन्द्रमतीविषयं विना अन्यस्मिन् कस्मिंश्चित् अपि विषये घोरकः प्रपञ्चस्य हानिकारकः न जातः । तादृशं निदर्शनं कुत्रापि नास्ति । मद्विषये तु तस्य औदार्यं भवद्भिरेव दृष्टं खलु ! घोरकसकाशात् एव घोरिकायाः अस्तित्वं ज्ञातम् । अतः विना कारणं जगतः हानिं यौ न चिन्तयतः तादृशौ वृथा किमर्थं मारणीयौ ?'' इति पृष्टवान् ।

वीरसेनस्य वचनं श्रुत्वा राजकुमाराः वस्तुस्थितिं ज्ञातवन्तः । अविचिन्त्य यत् कथितं, तदर्थं लज्जिताः ते । अनन्तरं चन्द्रमतीवीरसेनयोः विवाहः महता वैभवेन सम्पन्नः । तयोः विवाहार्थं घोरकः घोरिका चापि आगतवन्तौ । तौ 'जगतः शान्त्यर्थं ये कटिबद्धाः सन्ति, तादृशानां महापुरुषाणां साहाय्यं कुर्वः आवाम्' इति वचनं दत्तवन्तौ ।






# परिपूर्णा मानवता

विक्रमपुरस्य राजा अकस्मात् दिवङ्गतः । अतः बालस्यापि युवराजस्य पट्टाभिषेकः कारितः। राजगुरुः कदाचित् लोकानुभवरहितं नूतनं युवराजम् उक्तवान् - "यः राज्यपालनं करोति तेन मानवेषु मनुष्यत्वं कियत् अस्ति इति अवश्यं ज्ञातव्यम् । तद्विषये तदा तदा अहं भवन्तं बोधयिष्यामि" इति ।

"तत् ज्ञातुं कियान् कालः आवश्यकः भवति ?" इति पृष्टवान् युवराजः ।

तदा राजगुरुः उक्तवान् - "जनानां व्यवहारं भवान् सूक्ष्मं परिशीलयन् भवति चेत् अधिककालः न आवश्यकः" इति ।

कदाचित् कश्चित् गूढचारः आगत्य स्वकीयम् अनुभवम् उक्तवान् - "महाराज ! अहम् अरण्यमार्गेण गच्छन् आसम् । तदा मम पादे कण्टकं लग्नम् । वेदनाम् अनुभवन् अहं महता कष्टेन चलन् आसम् । तस्मिन् समये कश्चित् धावन् आगत्य 'व्याघ्रः आगच्छन् अस्ति । कुत्रापि निलीय तिष्ठतु' इति माम् उक्त्वा कश्चित् वृक्षम् आरूढवान् । अहम् अपि एकं वृक्षम् आरूढवान् । क्षणाभ्यन्तरे एव कश्चन व्याघ्रः तेन मार्गेण अग्रे गतवान् । अनन्तरम् आवाम् उभौ अपि वृक्षात् अवतीर्य गतवन्तौ" इति ।

एतत् श्रुत्वा राजगुरुः युवराजम् उक्तवान् - "एषः गूढचारः यस्य विषये उक्तवान्, तस्मिन् मनुष्यत्वस्य पादभाग-मात्रम् अस्ति । यतः सः 'व्याघ्रः आगच्छन् अस्ति' इति अपरं जागरितवान्, न तु तम् अपि रक्षितुं प्रयत्नं कृतवान्" इति ।

पुनः कदाचित् गूढचारः अन्यां काञ्चित् घटनाम् युवराजम् उक्तवान् -

कश्चित् अनाथः दरिद्रः बुभुक्षया पीडितः कस्यचित् धनिकस्य गृहस्य पुरतः मूर्च्छां गतः, पतितश्च । एतत् दृष्ट्वा तद्गृहस्य धनिकः

तस्मै भोजनं दत्त्वा स्वगृहे सेवकरूपेण तं नियोजितवान्। कदाचित् सः धनिकः सेवकं सम्यक् ताडयन् आसीत्। एतत् दृष्ट्वा तेन मार्गेण गच्छन् कश्चित् धनिकं पृष्टवान् - "किमर्थं तं ताडयति ?" इति।

तदा धनिकः उक्तवान् - "बुभुक्षया पीडिताय एतस्मै भोजनं दत्तवान् अहम्। अनन्तरं च एतद्वारा पत्रं लेखितवान् यत् - आजीवनम् अत्रैव सेवकरूपेण कार्यं करोमि इति। अतः अहं मम इच्छानुसारम् एतेन सह व्यवहरामि" इति।

एतत् श्रुत्वा प्रयाणिकः सेवकद्वारा लेखितं पत्रम् आनाय्य तत् पत्रं तत्रैव छिन्नं कृत्वा क्षिप्तवान्। अनन्तरं सेवकं - 'भवतः सेवकत्वं समाप्तम्। इदानीं भवान् यत्र इच्छति, तत्र गन्तुम् अर्हति' इति उक्त्वा ततः गतवान्।

एतत् श्रुत्वा पार्श्वस्थः राजगुरुः उक्तवान् - "तस्मिन् प्रयाणिके मनुष्यत्वस्य अर्धभागः अस्ति। यदि तदपेक्षया अपि अधिकं मनुष्यत्वं तस्मिन् स्यात्, तर्हि सः दरिद्रस्य जीवननिर्वहणविषये चिन्तनम् अकरिष्यत्। इदानीं तं दरिद्रम् अन्यः कश्चित् धनिकः क्रीणीयात् अपि" इति।

तदा युवराजः पृष्टवान् - "धनिकविषये किं वदति भवान् ?" इति।

"तस्मिन् धनिके मनुष्यत्वं किञ्चिदपि नास्ति। सः नररूपः मृगः एव" इत्युक्तवान् राजगुरुः।

पुनः कदाचित् द्वौ वणिजौ राजसभाम्



आगतवन्तौ। तयोः स्थितिः अतीव शोचनीया आसीत्। शोचनीयतायाः कारणम् आसीत् यत् - तौ उभौ अपि प्रयाणं कुर्वन्तौ आस्ताम्। तस्मिन् समये मध्येमार्गं चोराः तयोः वस्तूनि स्वीकृत्य तौ मारयितुं प्रयत्नं कृतवन्तौ। तावता चोरनायकः सहोद्योगिनः उक्तवान् - 'मूर्खाः! एतादृशान् मारयामः चेत् अस्माकं चौर्यवृत्तिः कथं प्रचलेत्? अतः एतयोः मारणं मास्तु। एताभ्यां प्रयाणार्थं किञ्चित् धनं दत्त्वा एतौ प्रेष्यताम्' इति। चोरनायकस्य कथनानुसारं ते वणिग्भ्यां रूप्यकद्वयं दत्त्वा प्रेषितवन्तः आसन्।

एतत् श्रुत्वा राजगुरुः उक्तवान् - "चोरनायके मनुष्यत्वस्य केवलं पादोन-भागः अस्ति। चौर्यवृत्तेः कारणतः सः

परिपूर्णमानवः भवितुं न शक्तवान्'' इति।

कदाचित् राजभटः कश्चित् एकं धनिकम् अपरं दरिद्रं च महाराजसमीपं नीतवान्। उक्तवान् च - ''महाराज ! एषः धनिकः एतं दरिद्रं नद्यां पातितवान्, अनन्तरं स्वयम् अपि पतितवान्। अहं यावत् नदीसमीपं गतवान्, तावता एतौ उभौ अपि तीरं प्राप्तवन्तौ आस्ताम्'' इति।

एतत् श्रुत्वा महाराजः धनिकं पृष्टवान् - ''किमर्थं भवान् एतं नद्यां पातितवान् ?'' इति।

तदा धनिकः उक्तवान् - ''महाराज ! एषः मम प्रतिवेशी एव। दरिद्रः असहायश्च एषः इति विचिन्त्य अहम् एतस्य भूमेः अपि आक्रमणं कृतवान्। एषः मम दुराचारविषये सर्वान् वदति स्म। तेन कारणेन अपमानितः अहम् एतस्य गृहम् अग्निना दग्धवान्। यदा एतस्य गृहं दग्धम्, तदा ग्रामीणाः सर्वे मिलित्वा विचारणं कृतवन्तः। तदापि अहम् 'एतस्य अजागरूकताकारणतः एव गृहं दग्धम् अभवत्' इति उक्तवान्। मम वचनं सत्यम् इत्येव ग्रामीणाः चिन्तितवन्तः। अद्य एषः नदीसमीपे अकस्मात् मिलितवान्। 'मम सर्वनाशस्य कारणीभूतः भवान् एव' इति माम् उक्तवान्। तेन कुपितः अहम् एतं नद्यां पातितवान्। तस्मिन् समये सः मां दृढं गृहीतवान् आसीत् इत्यतः अहम् अपि जले पतितवान्। अहं तरणं न जानामि। अतः जले निमग्नः। तदापि एषः एव मां जलात् उद्धृत्य नदीतीरम् आनीतवान्। एवं च यद्यपि अहम् एतं बहुधा वञ्चितवान्, तथापि एषः अद्य प्राणदानेन मां रक्षितवान्'' इति।

एतत् श्रुत्वा राजगुरुः उक्तवान् - ''दृष्टं खलु वत्स ! सः दरिद्रः परिपूर्णः मानवः। अतः एव सः वञ्चकस्य अपि धनिकस्य स्वभावं परिवर्तयितुं शक्तः जातः। तस्मात् धनिके अपि मानवीयतागुणः उत्पन्नः। यः परिपूर्णः न, सः अन्येषां स्वभावपरिवर्तनं कर्तुं न शक्नोति। तस्मिन् मनुष्यत्वम् उत्पादयितुम् अपि न शक्नोति'' इति।

राजगुरोः बोधनेन युवराजः मनुष्यत्वस्य स्वरूपं ज्ञातवान्।



# प्रकृतिवैचित्र्याणि -

## विरलः शुकः




शुकजातिषु 'हीरामन् टोटा' नामकजातीयाः शुकाः अतीव विरलाः । एतेषां कण्ठस्वरः अतीव मधुरः । मानवभाषाम् एते बहुशीघ्रम् अनुकुर्वन्ति । मोगल्-महाराजः हुमायून् गाग्रन्दुर्गं बहदूर्षातः यदा वशीकृतवान्, तदा तत्रत्यः सुवर्णपञ्जरस्थः शुकोऽपि मोगल्-महाराजस्य वशम् आगतः । शुकम् एव आश्चर्येण पश्यन् आसीत् हुमयून् । तदा बहदूर्षांमहोदयेन प्रेषितः रूमीखान्नामकः तत्र आगतः । रूमीखान्वर्यं दृष्ट्वा हिरामन् - ''द्रोही, द्रोही'' इति उक्तवान् । तस्य शुकस्य आशयः आसीत् यत् - हुमायून् द्रोही इति । सुप्रसिद्धः पक्षिशास्त्रज्ञः डा।। सलीम् आली वदति यत् - एतादृशाः शुकाः बहुशीघ्रं सम्भाषणस्य अभ्यासं कुर्वन्ति । तावत् सामर्थ्यम् अस्ति एतेषाम् इति । दैर्भाग्यवशात् एतज्जातीयाः शुकाः नश्यमानाः सन्ति इदनीन्तनदिनेषु । मध्यप्रदेशस्य दुर्गं परितः ये 'बेहीडिया' वर्गीयाः जनाः निवसन्ति, ते एतादृशान् शुकान् यत्र कुत्रापि पश्यन्ति चेत्, जालैः तान् गृह्णन्ति ।

## सुवर्णवर्णीयः वानरः




पश्चिमबङ्गालदेशस्य 'जल्पायुगुरि' - समीपस्थे वोल्काग्रामे सुवर्णवर्णीयः वानरः (गोल्डन् लाङ्गूर्) दृष्टः अस्ति । विंशतिवर्षेभ्यः पूर्वम् एतादृशः वानरः आसीत् । वोल्काग्रामे लब्धं वानरं 'बक्सा टैगर् प्राजेक्ट्' जनाः आस्सांराज्यस्य मानसप्राणिसंरक्षणालयं प्रति नीतवन्तः । महता वेगेन नश्यमानेषु प्राणिषु एषः वानरः अपि अन्यतमः ।

## बुभुक्षातः मृताः पक्षिणः




ब्रिटिष्द्वीपेषु सामान्यतः ८५,००० समुद्रपक्षिणः बुभुक्षापीडिताः सन्तः मृताः इति वार्ता । ब्रिटिष्द्वीपानां पूर्वतीरप्रदेशेषु ये निवसन्तः आसन्, ते समुद्रस्थान् मत्स्यान् गृहीतवन्तः इति कारणतः एतेषां पक्षिणाम् आहारस्य अभावः जातः । अतः एव बुभुक्षया पक्षिणः म्रियमाणाः सन्ति । षेट्ल्याण्डस्प्रदेशे ५०,००० समुद्रपक्षिणः मृताः । एतेषु ग्युल्मोट्-षान्स्-र्याजेर्बिल्स्-पफिन्स्प्रभृतीनां संख्या महता प्रमाणेन न्यूना जायमाना अस्ति ।

Say "Hello" to text books and friends
'Cause School days are here again
Have a great year and all the best
From Wobbit, Coon and the rest!



# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

## विजितां शीर्षिकाम् अक्टोबर् - ९४ मासे प्रकटयिष्यामः ।



S.B. Prasad



S.B. Prasad

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा अगस्ट् - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट्-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

## 'जून्' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -

प्रथमचित्रम् - **जलान्निष्कासितो मीनः कथं जीवेत् जलं विना ।**

द्वितीयचित्रम् - **वनान्निष्कासितो व्याघ्रः जीवेदपि, न वा क्वचित् ।**

प्रेषकः - प्रभाकर म. भातखण्डे, 'सङ्गीताश्रमः', रामदासपथः, मुलुण्ड् (पूर्व), मुम्बयी - ४०० ०८१




**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**

अपने प्यारे चहेते के लिए जो हो दूर सुदूर
है न यहाँ अनोखा उपहार जो होगा प्यार भरपूर

# चन्दामामा




**प्यारी-प्यारी सी चंदामामा दीजिए उसे उसकी अपनी पसंद की भाषा में –**
आसामी, बंगला, अंग्रेजी, गुजराती, हिन्दी, कन्नड
मलयालम, मराठी, उड़िया, संस्कृत, तमिल या तेलुगु
**–और घर से अलग कहीं दूर रहे उसे लूटने दीजिए घर की मौज-मस्ती**

## चन्दे की दरें (वार्षिक)

**आस्ट्रेलिया, जापान, मलेशिया और श्रीलंका के लिए**

समुद्री जहाज़ से रु. 105.00 वायु सेवा से रु. **252.00**

**फ्रान्स, सिंगापुर, यू.के., यू.एस.ए.,**
**पश्चिम जर्मनी और दूसरे देशों के लिए**

समुद्री जहाज़ से रु. 111.00 वायु सेवा से रु. **252.00**

अपने चन्दे की रकम डिमांड ड्रॉफ्ट या मनी ऑर्डर द्वारा
'चन्दामामा पब्लिकेशन्स' के नाम से निम्न पते पर भेजिए:

सर्क्युलेशन मैनेजर, चन्दामामा पब्लिकेशन्स, चन्दामामा बिल्डिंग्स, वडपलनी, मद्रास-६०० ०२६.

